Kavyagunadarsa Series No. 2.

# Meghasandesa Vimarsa

BY

R. KRISHNAMACHARIAR, M.A., (Vidyanidhi)

AUTHOR OF VASANTIKASWAPNA

AND

RAGHUVAMSAVIMARSA.



SRIRANGAM:

SRI VANI VILAS PRESS.

1915.

Price 1 Re.] [Postage Extra.





॥ श्रीः ॥

काव्यगुणादर्शो

# ॥ मेघसंदेशविमर्शः ॥


वासन्तिकस्वप्ननाटकस्य रघुवंशविमर्शस्य च

प्रणेत्रा मद्रमण्डलस्थसंस्कृतपाठशाला-

परिशोधकेन विद्यानिधि

परवस्तु. र. कृष्णमाचार्येण

विरचितः





श्रीरङ्गनगरे

श्रीवाणीविलासमुद्रायन्त्रालये

संमुद्रितः ।

राक्षसनामसंवत्सरे
ज्येष्ठमासे

मूल्यं एका रूपिका
प्रेषणव्ययं विना

॥ श्रीः ॥

# ॥ मेघसंदेशविमर्शः ॥

कविप्रथमपद्धतिमादिकवेर्मुखादादौ निर्गलितां सरस्वतीमनवरतमादरातिशयेनानुशीलयन्नमान्तमानन्दमनुभवन् अजानन्नेवात्मन्याविष्कृतोदयममरवाणीविलासमपर्णादासः कविसार्वभौमः— 'जानकीविरहवेदनाकबलितसत्त्वस्य श्रीरामभद्रस्य संदेशमान्तरेण चेतसा वहन् सागरलङ्घने बद्धोद्यमो वायुसुतः बभौ मेघ इवाकाशे विद्युद्गुणविभूषितः—' इति प्रपञ्चितां वाग्धोरणीमसकृदनुसंदधानः, विद्युत्वन्तं मेघं विरहिणोः मिथः संदेशवहने कल्यमाकलय्य संदेशकाव्यमिदमारचयन्, कुबेरशापेन प्रियतमया विरहितस्य कस्यचिद्यक्षस्य मानसीं वृत्तिं विषयीकृत्य विप्रलम्भशृङ्गारमतिमधुरया सुधास्यन्दिन्या वाक्सरण्या वर्णयन्नावर्जयति मानसं सहृदयानाम् ॥

'अयं स कालः संप्राप्तः समयोऽद्य जलागमः ।
संपश्य त्वं नभो मेघैः संवृतं गिरिसानुभिः ॥'

इति मधुरपक्रमते विरहिणो राघवस्यातिभूमिं गतां मदनावस्थां वर्णयितुमादिकविः ।

'आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुम्' 'अबलाविप्रयुक्तः स कामी' इत्यारभतेऽसावपि महाकविः ॥

'प्रवासिनो यान्ति नराः स्वदेशान्—' इति वाल्मीकिमुखान्निःसरन्ती वाणी, 'कः संनद्धे विरहविधुरां त्वय्युपेक्षेत जायाम्' 'यो वृन्दानि त्वरयति पथि श्राम्यतामध्वगानां मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि—' इति सरसमात्मानमावेदयति कालिदासमुखेन ॥

'मेघाभिकामा परिसंपतन्ती संमोदिता भाति बलाकपङ्क्तिः।
वाताबधूता वरपौण्डरीकी लम्बेव माला रचिताम्बरस्य ॥'

इति महर्षेराविर्भूता सरस्वती, 'नूनमाबद्धमालाः सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः—' इति महाकविजिह्वया पुनः प्रसरति ॥

'महत्सु शृङ्गेषु महीधराणां विश्रम्य विश्रम्य पुनः प्रयान्ति' इत्यादौ निर्गलिता वाणी, 'खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र' इति संदेशकाव्ये पुनरप्यनुश्रूयते ॥

'निद्रा शनैः केशवमभ्युपैति—' इति प्राचेतसमुखात् आषाढे शार्ङ्गपाणेः स्वापारम्भं सूचयन्ती सरस्वत्येव 'भुजगशयनादुत्थिते शार्ङ्गपाणौ' इति प्रकारान्तरेण तमेवाशयं विवृ-

ण्वती सहृदयानामावर्जयति मानसम् ॥

'सुरतामर्दविच्छिन्नाः स्वर्गस्त्रीहारमौक्तिकाः ।
पतन्तीवाकुला दिक्षु तोयधाराः समन्ततः ॥'

इति कविकोकिलेनोत्प्रेक्षिता सरणिः 'या वः काले वहति सलिलोद्गारमुच्चैर्विमानैर्मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम्—' इति सूक्तावप्यन्तर्लीनेवावलोक्यते ॥

एवमादिकाव्ये प्रदर्शितां पद्धतिमनुसरन्कविसार्वभौमः रसिकजनरसायनमिदं संदेशकाव्यमारचयन्नात्मानं विनोदयन् गम्भीरप्रकृतिभिः परार्थैकफलैरुदाराशयैः बलाहकस्य रीतिः सर्वात्मनानुसरणीयेत्युपदिशतीव ॥

सर्वविदितमेवेदं यन्महाकवेः सूक्तिषु गौरवमनितरसाधारणमर्थस्य, अभिनन्दनीया चातुरी शब्दप्रयोगस्य, सहृदयैकवेद्यं गाम्भीर्यमाशयविशेषाणाम्, माधुर्यं रीतेः, सौकुमार्यं रचनायाः, औचित्यं च वस्तुघटनायाः व्याख्यानत एवावगम्येरन्निति । सन्त्येवास्य काव्यस्य दक्षिणावर्तनाथमल्लिनाथादिभिर्विरचिता अन्याश्च सारोद्धारिणीवल्लभाविद्युल्लतादयो व्याख्याः । एतासु काश्चित्प्रायः शब्दसौष्ठवैकविचारे, काश्चिदलंकारनिर्णये, काश्चित्पदनिष्पत्तिप्रकारवर्णने प्रवृत्ताः, तत्तद्व्याख्यातॄणां पाण्डित्य-

संस्काररसानुभवप्रकारादिकमेवानक्षरमावेदयन्ति । अथापि विद्युल्लतैव मेघस्य स्वरूपं कात्स्न्र्येन विशदयन्ती रसिकाननुरञ्जयति । तथा हि—

काव्यस्यास्य परिशीलनेन किं फलमुपलभ्यते? इत्यादावेवानुविमृशन्ती विद्युल्लता एवं निर्दिशति— 'अत्र तावन्मृदुलचेतसां व्युत्पाद्यानामक्लेशेनैव विशिष्टशब्दार्थव्युत्पत्तिः, तत्तद्देशविशेषव्यवहारवेदनम्, पुण्यतीर्थदेवायतनादिसंकीर्तनेन दुरितक्षयः, कीर्तिरलघीयसी, राजादिवल्लभतया द्रविणसंपत्तिः, कामसूत्रादिविद्यासु गीतकलासु च कौशलम्, संभोगविप्रलम्भरूपशृङ्गारसागरकर्णधारत्वम्, पतिव्रताधर्मपरिज्ञानम्, सहृदय इति सदसि सत्कृतिः, मन्दीकृतपरब्रह्मानन्दसंदोहश्च रसास्वाद इत्यादीनि परःशतं प्रयोजनानि' इति ।

'काव्यहृदयगह्वरगोपितमुपह्वरे सकलपुमर्थसाधनसमर्थमुपदेशरत्नम्' इत्थं निरूपयति विद्युल्लता—'महात्मनोऽपि यक्षस्य महिलासङ्गतरङ्गितानङ्गरसपारतन्त्र्यदोषस्य स्वाधिकारप्रमादः, तेन स्वामिकोपः, तस्माच्छापोपलम्भः, ततः स्वमहिमभ्रंशः, प्रियावियोगवेदनासन्तानानुभवश्चेत्यनर्थपरंपरा संपतिता; अतो विषयेष्वतिसक्तिरनर्थाय' इति ।



रामगिर्याश्रम.

लक्ष्मी आर्ट—भायखळा, मुंबई.

कश्चित्कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ १ ॥

'कान्ताविरहगुरुणा' इत्यत्र– 'स्वप्नेऽप्यविदितविरहदुःखस्य यक्षस्य 'ईदृशो दयितावियोगः' इति शापेनैवोपदिष्टत्वात् स गुरुरित्युच्यते अज्ञातज्ञापकत्वसामान्येन—इति व्याकुर्वन् तेनैव कान्तातिसक्तिमूलत्वमपि प्रमादस्यावगमयन्, उत्तरमेघे 'तं तमात्माभिलाषं निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु' इति पद्ये क्षपाशब्दस्वारस्यकथनप्रसङ्गे 'शापमोक्षादूर्ध्वं पुनरीदृशव्यसनापातपरिहाराय स्वाधिकारावधानेनैव दिवसानामतिवाहनात् भोगयोग्ये निशामुख एव भोगानुसेवनादसंभाव्यविरहत्वमपि ध्वन्यते' इत्यादि वर्णयन्पूर्णसरस्वतिः सहृदयान् रसयतीत्यहो! सरणिरेषा न दृष्टचरी व्याख्यानान्तरेषु ।

कीदृशी वृत्तिरस्य यक्षस्य परिकल्पिता? कथं वानेनापराद्धम्? इत्यादिकमसौ टीकाकारः मल्लिनाथो वा न विचारयति । कुबेरेणोद्यानद्वाररक्षणेऽधिकृतोऽयमनुचरो भर्तृनियोगमुल्लङ्घ्य, अन्यत्र गतोऽभूत् । तदानीमैरावत उपवनमुच्छृङ्खलं प्रविश्य कुसुमद्रुमाणामुच्छेदमकरोत्— इत्यादिकथा प्राचीनव्याख्या-

नेषु केषुचित्पठ्यते । कैलासनाथस्य पूजार्थमनुदिवसं प्रातः कुसुमानयनाय नियुक्तोऽसावनुचरः, आलस्याद्रात्रावेवान्यमुखेन कमलमुकुलान्याहृत्य प्रातः पूजार्थमाहरन् तदानीमेव विकसद्भ्यः पद्मेभ्यो निःसरद्भिर्मधुपैरभिहताङ्गुलिना धनपतिना शप्तः— इति केचन कथयन्ति ।

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान्कनकवलयभ्रंशरिक्तप्रकोष्ठः ।
अषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥ २ ॥

कविरसौ रामगिर्याश्रमेषु यदृच्छया भ्रमन् चित्रकूटशृङ्गेषु लग्नानम्बुदानसकृन्निरीक्ष्य किमप्यमन्दं प्रमोदमन्वभवदिति रघुवंशे 'शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः । बध्नाति यो बन्धुरगात्रि चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः' इत्यनेनापि ज्ञायते ।

'महिषाश्च वराहाश्च मत्तमातङ्गरूपिणः' इति पुराणसर्वस्वोक्तरीत्या सत्स्वपि नीलमेघस्य सादृश्यमावहत्सु अनेकेषु वस्तुषु, हिमवत्सानुषु वप्रक्रीडापरिणतमात्मनः शापकारणमैरावतमनुध्यायन् गजसाम्यमम्बुदस्योत्पश्यति यक्ष इत्यपि संभाव्यते ।

कनकवलयभ्रंशरिक्तप्रकोष्ठः— इह कनकवलयस्यैकस्य



**मेघस्वागत.**

लक्ष्मी आर्ट–भायखळा, मुंबई.

धारणं मङ्गलार्थमथवा विरहचिह्नद्योतनार्थमित्यादि वर्णयन्पूर्णसरस्वतिः शाकुन्तलात्समानार्थकानि वाक्यान्युद्धृत्य उदाहरन् महाकवेराशयं सम्यगवबोधयति । इदं पद्यमनया व्याख्यया विमृशन्तो वयं रघुवंशे 'आमुञ्चतीवाभरणं द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते' इत्यत्र मल्लिनाथप्रोक्तमाशयं साध्वित्येवाभिनन्दामः ।

तस्य स्थित्वा कथमपि पुरः केतकाधानहेतो-
रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ ३ ॥

अनुचरो राजराजस्य— इत्यनेन 'धिक् पारतन्त्र्यस्य दौरात्म्यम्' इति कविहृदयं सरसमुपदिशति पूर्णसरस्वतिः । मल्लिनाथस्तु 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययमेवानुस्मारयति ।

प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम् ।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥

'अत्र कुशलशब्देन प्रियतमापुनःसमागमोत्सवहेतुभूतमे-

तावतो मासान् प्राणसंधारणमेवोच्यते' इति व्याकुर्वती 'क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ' इति रघुवंशप्रोक्तं वाक्यं दृष्टान्ततयोदाहरति विद्युल्लता। न ह्यत्र स्वारस्यमौचित्यं वा पश्यामः। उदाहृतस्थले वसिष्ठः शिष्यमुखेन इन्दुमतीं मृतामनुशोचन्तमभिषङ्गजडमजं 'मूर्ख, एतावतीः समाः तया सह अनितरसाधारणो भोगस्त्वयान्वभावि किल; प्रकृतिर्हि शरीरिणां मरणम्, जीवितं तु विकृतिः; यदेषा इयदवधि जीवितमधारयत्, महदिदं ते भागधेयम्' इति तत्त्वमुपदिशति। इह तु 'एति जीवन्तमानन्दो नरं वर्षशतादपि' इति न्यायेन भावि सुखमुत्पश्यति यक्षः।

धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघः
संदेशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः।
इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे
कामार्ता हि प्रणयकृपणाश्चेतनाचेतनेषु ॥ ५ ॥

प्रणयकृपणा इति हृदयंगमं पाठमुनुवाचयन्तः काव्यज्ञाः 'सुकविवचांसि पाठान्यथाकृत्य मोहाद्रसगतिमवधूय प्रौढमर्थं विहाय' इत्यनुशोचतः पूर्णसरस्वतेर्विषादः स्थान एवेत्युररीकुर्युः।

जातं वंशे भुवनविदिते पुष्करावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥

'भुवनविदिते' इत्यत्र 'यतस्ते सुरकारिकरपीवरप्रचण्डधारासारसंप्लावितजगदण्डपिण्डा देवकार्याधिकारिणः' इति व्याकुर्वन्पूर्णसरस्वतिः सत्यमेव प्रलयसमयमासन्नमनुभावयतीव ।

'दूरबन्धुः' इह भार्यैव बन्धुरिति सोपपत्तिकं विशदयन्, 'वैदेहिबन्धोर्हृदयं विदद्रे' इति समानार्थकं वाक्यमुदाहरन्, आदावेव प्रदर्शितं मैथिलीं प्रति राघवेण हनूमन्मुखेन प्रेषितस्य संदेशस्य अस्य चोपमानोपमेयभावमधुरं कवेर्हृदयं तत्र तत्र स्फुटं विद्योतयति ।

अधिगुणे— 'अधिकगुणे' इति मल्लिनाथो वदति । पूर्णसरस्वतिस्तु प्रथमम् 'जानामि त्वाम्' इत्यत्र 'अहमेवैतत्सर्वं साध्ववगच्छामि, न तु यस्यकस्यचिद्वचनाद्विश्वसिमि' इति व्याख्याय, अनन्तरम् 'अधिगुणे' इति पदस्य 'अधिगतगुणे' इति निपुणमर्थमुपदिशति ।

पुष्करावर्तकानाम्— 'पुष्कराश्चावर्तकाश्च केचिन्मेघानां

श्रेष्ठाः' इत्येतावता परितुष्यति संजीविनी। विद्युल्लतापि तेषां सुरकरिकरपीवरासारान् स्मारं स्मारं भीतभीतेव जोषंभावमास्थिता। किं कुर्मः? 'पुष्करा नाम ते मेघा बृहतस्तोयमत्सराः। पुष्करावर्तकास्तेन कारणेनह शब्दिताः॥' इति पुराणसर्वस्वे उपलभ्यते। विष्णुपुराणेऽपि 'मेघास्त्रिविधाः—— अग्निजाः वायुजाः पक्षजाश्चेति। ये हि कुलिशच्छिन्नेभ्यो नगानां पक्षेभ्यः समुत्पन्नाः, ये चाग्रभागेषूदकधारामावहन्ति त एव पुष्करावर्तका इति।

**संतप्तानां त्वमसि शरणं तत्पयोद प्रियायाः**
**संदेशं मे हर धनपतिक्रोधविश्लेषितस्य।**
**गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां**
**बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या॥ ७॥**

धनपतिक्रोधविश्लेषितस्य—— अत्र 'धनपतेः कुबेरस्य क्रोधेन' इत्येतावन्मात्रेणोच्छ्वसिति संजीविनी। विद्युल्लता तु 'निधिपतेः क्रोधेन न पुनरितोगतेन महापराधेन। निर्निमित्तमेव काशं कुशं वावलम्ब्य श्रीमतामनपेक्षितापरोपतापः कोप इति भावः' इति रमणीयं भावमालिखति हृदये।

इह धनपतित्वनिर्देशेन, कुबेरोऽयं स्वयं कुत्सितकलेबरः, अविज्ञातसौकुमार्यवृत्तान्तः, असूयति विलासिजनेभ्यः सुभ-

गेभ्य इत्यपि ध्वनिः । चरणत्रयेण दन्ताष्टकेन चोपेतो द्रष्टृणामुद्वेगकरः कु-बेरः इति पौराणिकी काचन कथा श्रूयते ।

गन्तव्या ते वसतिरलका— महाकवेः अमरावत्यपेक्षया अलकायाम्, नन्दनापेक्षया चैत्ररथे चात्यन्तमादर इति 'न मैथिलेयः स्पृहयांबभूव भर्त्रे दिवो नाप्यलकेश्वराय,' 'एको ययौ चैत्ररथप्रदेशान्,' 'वस्वौकसारामभिभूय' इत्यादिनावगम्यते ।

बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या— अनेन 'असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः । तमिस्रपक्षेऽपि सह प्रियाभिः ज्योत्स्नावतो निर्विशति प्रदोषान् ॥' इत्यन्यत्राविष्कृतां कवेः संभावनामनुस्मारिताः स्मः ।

त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसत्यः ।
कः संनद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्ययमिव जनो यः पराधीनवृत्तिः ॥

इहोत्तरार्धे 'अन्योऽपि यः पुमानयं जन इव पराधीनवृत्तिर्न स्यात् अहं यथा अनतिक्रमणीयेन स्वामिना परतन्त्रः, एवं परतन्त्रता यस्य नास्ति इति वैधर्म्योदाहरणमेतत् । स्वतन्त्रस्तु न कोऽप्युपेक्षेत' इति तृतीयचतुर्थपादयोरेकवाक्यतामवगमयन्ति

पूर्णसरस्वतिप्रमुखाः सर्वेऽपि व्याख्यातारः । एतादृशार्थवर्णने किंचिदिव क्लेशोऽनुभूयते। चतुर्थपादे न किमपि स्वारस्यमुपलभ्यते च। तादृशे काले न कोऽपि जायामुपेक्षेत; सन्त्येवास्मिन् लोके पराधीनवृत्तयो बहवो जनाः; तेष्वपि न स्यादन्यः अयं जन इवेदृशीं दुर्दशामापन्नः; धिक् मे भागधेयम्—इति यक्षेण स्वनिर्वेदातिशयः सूचितः इति मन्यामहे । अत्र सहृदया एव प्रमाणम् ।

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।
गर्भाधानक्षमपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगाः खे भवन्तं बलाकाः ॥

अनुकूलः पवनो मन्दं मन्दं नुदति, वामश्चातको मधुरं मधुरं नदति, बलाकास्त्वाबद्धमण्डलाः सेविष्यन्ते— इति वर्णयन्कविः, वर्षासमय इतः परमागमिष्यति इति बोधयन् 'आषाढस्य प्रथमदिवसे' इति सूक्तिं द्रढयतीव ।

पद्यस्यास्य सरणिं मुहुर्मुहुरनुध्यायतामस्माकं 'मन्दाक्रान्ताच्छन्दोभिर्मधुरमुद्ग्रथितं श्रवणसुभगमिदं काव्यमाबद्धरसिकमण्डलाः सहृदयाः सेविष्यन्ते—' इति ध्वनिरेकः स्फुरति ।

पूर्वार्धे त्वंकारयुक्तया गिरा द्विर्निर्दिष्टो मेघः उत्तरार्धे भवच्छब्देनाभिधीयते । अत्र कीदृशः कवेराशयः? इति चेत् ब्रूमः—— रागोन्मत्ताभिर्नयनसुभगाभिः प्रणयिनीभिः स्वयंप्रार्थितरतिरनुसेवितश्च नायकः प्रकृष्टसौभाग्यातिशयसंपन्नः अशेषजनमाननीयो भवच्छब्देनैव निर्देष्टव्यः; अन्यथा कवेररासिक्यं प्रसज्येत—— इति ।

तां चावश्यं दिवसगणनातत्परामेकपत्नी-
मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।
आशाबन्धः कुसुमसदृशप्राणमप्यङ्गनानां
सद्यःपातप्रणयि हृदयं विप्रयोगे रुणद्धि ॥ १० ॥

न केवलं भवतः, परं ममापि ते भ्रातुः सौभाग्यं किंचिदिव विद्यते, यतः मत्स्नेहसंविदवलम्बितजीविता मामेवानवरतं हृदयेनालिखन्ती अनादृतशरीरसंस्कारा संन्यस्ताभरणा संकल्पसंगमविनोदितानङ्गवेदना युगसहस्रायमाणान् दिवसान् कृच्छ्रादतिवाहयन्ती रमणीमणिः काचित्तवैव नयनगोचरीभविष्यति इत्यभिसंधिः । इममेवाशयं 'वाचालं मां न खलु सुभगंमन्यभावः करोति' इत्युत्तरमेघे सूचयति महाकविः । रमणदर्शनोत्सुकानां नयनसुभगानां बलाकानां स्मरणेन तादृशीं निजदयितामपि यक्षः अनुस्मरति इति प्रतिपादयतोऽस्य पद्यस्या-

नैव पाठः समुचितः । कविहृदयमविज्ञाय व्याख्यातारः केचन प्रक्रमभङ्गमिह मन्यन्ते ।

कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां
तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः ।
आ कैलासाद्बिसकिसलयच्छेदपाथेयवन्तः
संपत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥

अत्र कविः श्रवणसुभगेन स्तनितेन युक्तो मेघः, न केवलं बलाकाः किंतु कृत्स्नामपि महीं अवन्ध्यां (नानाविधसस्यप्रसवयोग्याम्) कर्तुं प्रभवतीति स्वाशयं चकारेणाविष्करोति । कथं विरुद्धानामपि राजहंसानां मेघस्य सहायतोक्तिः ? इत्याशङ्क्य 'वर्षकलुषितजलाशयमात्रे तेषां द्वेषात्' इति समाधीयते विद्युल्लतया । निर्मलानां जलाशयानां कालुष्यस्य कारणीभूतेषु जलदेष्वेव विरोधो न्याय्यः; तपस्विनीष्वस्वतन्त्रासु कमलिनीषु द्वेषस्य कथमवकाशः ? इति प्राप्ते ब्रूमः— पार्थिवान्भोगान्विहाय कैलासं प्रति यियासूनां परमहंसश्रेष्ठानां (राजहंसानाम्) रागद्वेषाद्यभावः सहज एवेति वा, करुणां दशामापन्नस्य सुहृदो निमित्ते महान्तं क्लेशमङ्गीकृत्य सुदूरं गच्छतस्तवोपरि बहुमानात् सहजमपि द्वेषं विस्मृत्य सहायाः संपत्स्यन्ते हंसश्रेष्ठा इति वा कवेराशयः इति ।

आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ।
काले काले भवति भवता यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥

पद्यमिदमनुध्यायन्तो वयमत्रैव शैले निखिलजनवन्दनीयया रामभद्रस्य पादुकया शिरस्यङ्कितस्य रघुपतिनियोगात्प्रतिनिवृत्तस्य तदा तदा राघवगुणाननुस्मृत्य दीर्घमुष्णं च निश्वसतो नन्दिग्रामगतस्य भरतस्य लोकोत्तरं वृत्तमनुस्मारिताः स्मः ।

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
संदेशं मे तदनु जलद श्रोष्यसि श्राव्यबन्धम् ।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपयुज्य ॥

इह मार्गशब्दस्य अध्ववाचित्वं प्रदर्शयितुं नैघण्टुकं प्रमाणमुदाहृत्य विरमति संजीविनी । विद्युल्लता तु ‘रसिकजनमौलेः परमेश्वरभक्तिशालिनः तव यात्रानुगुणो भुक्तिमुक्तिसाधनमेकः पन्थाः ; नीरसानां नास्तिकानां च कमपि पुमर्थमस्पृशन्नन्य एव’ इति भावं विवृणोति ।

अरण्येषु जलमयेनाहारेण नियमशतैश्च नितान्तशोषितक-

-रणग्रामाः क्षीणक्षीणा महर्षय आपाततो विरुद्धार्थप्रतिपादकतया प्रतीयमानानां निगमशिखरवाक्यानां तत्त्वार्थावधारणे नितरां खिन्नमतयः क्रमेण सूक्ष्मतत्त्वमवगत्य मुक्ता भवन्ति— इति ध्वनिरुत्तरार्धे स्फुटमवगम्यते। अत्र कविः उत्तरमेघे विद्यमानं निरतिशयं माधुर्यं स्वयमेव 'श्राव्यबन्धं श्रोष्यसि' इत्यनेन सूचयति।

अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभि-
दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः।
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन्स्थूलहस्तावलेपान्॥

इह 'रसिको निचुलो नाम महाकवेःकालिदासस्य सहाध्यायी परापादितानां कालिदासप्रबन्धदूषणानां परिहर्ता यस्मिन् स्थाने तस्मात्स्थानादुन्मुखो निर्दोषत्वादुन्नतमुखः सन्, पथि सारस्वतमार्गे, दिङ्नागाचार्यस्य कालिदासप्रतिपक्षस्य, हस्तावलेपान् हस्तविन्यासपूर्वकाणि दूषणानि, परिहरन्'— इत्यर्थान्तरमुपदिशति संजीविनी। केचन पाश्चात्या विद्वांस इहान्यापदेशरीत्या उपालब्धः कवेरनभिमतः समकालिको दिङ्नागाचार्यः खिस्त्वब्दीयाष्टासप्रत्युत्तरपञ्चशततमे हायने समभूदिति कालिदासोऽपि तात्कालिक इति निरूपयन्ति।

मेघो हि छन्दसि 'अद्रिः, ग्रावा, गोत्रः, अश्मा, पर्वतः गिरिः' इत्यादिपदैः निर्दिश्यते इत्यामनन्ति निरुक्तकाराः । अनेनैव ऊह्यते— वेदपुरुषस्याप्यभिमतमद्रिसाम्यं मेघस्येति ।

**रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्ता-**
**द्वाल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य ।**
**येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते**
**बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥**

नवाम्बुदानीकमुहूर्तमण्डनस्य धनुराकारेणाम्बरतले परिदृश्यमानस्य तेजःपुञ्जस्यावलोकने कविरनितरसाधारणं प्रमोदमनुभवति । एवमेव रघुवंशे 'केवलोऽपि सुभगो नवाम्बुदः किं पुनस्त्रिदशचापलाञ्छितः' इति वर्णयति ।

वल्मीकाग्रात्— अत्र 'इन्द्रचापं किल वल्मीकान्तर्व्यवस्थितमहानागशिरोमणिकिरणसमूहात्समुत्पद्यते ; वासुकिफणामणिगणद्युतिः वल्मीकरन्ध्रान्निःसृत्य नभसि मेघे शक्रधनुराकारमापद्यत इत्यागमः' इति वदति सारोद्धारिणी ।

**त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः**
**प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः ।**
**सद्यः सीरोत्कषणसुरभि क्षेत्रमारुह्य मालं**
**किंचित्पश्चाद्व्रज लघुगतिर्भूय एवोत्तरेण ॥ १६ ॥**

इह भ्रूविलासप्रकारं विस्तरतो वर्णयति विद्युल्लता। संजीविनी तु किञ्चिदिव दीर्घनिद्रायाः प्रतिबुद्ध्य, लोचने प्रमृज्य, उत्तरार्धे यथा कश्चिद्बहुवल्लभः पतिः कुत्रचित् क्षेत्रे (कलत्रे) गूढं विहृत्य दाक्षिण्यभङ्गभयान्नीचमार्गेण निर्गत्य पुनः सर्वाध्यक्षं संचरति तद्वदिति ध्वनिः इति आत्मनोऽपि रासिक्यं दर्शयतीत्यहो! जनपदवधूनामपि क्वचिद्भ्रूविलासाभिज्ञता।

त्वामासारप्रशमितवनोपप्लवं साधु मूर्ध्ना
वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः।
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः॥

'आङ्ग्लाः केचनाविज्ञातभारतवर्षीयस्वभावाः, देशेऽस्मिन् कृतज्ञतागन्धोऽपि मानवेषु नोपलभ्यते इति विश्वसन्ति; उद्घोषयन्ति चेदृशमाशयम्। यदि चेमे पद्यस्यास्यार्थमवगच्छेयुः, तर्हि चिरप्ररूढमज्ञानमूलकमिममाशयं स्वयमेव दूरतः परित्यजेयुः' इति विल्सन्नामकः कश्चन एरोपीयविबुधवरः कालिदाससूक्तिषु निमग्नहृदयः स्वयं विलिखति।

छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रै-
स्त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे।

नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥

रघुवंशविमर्शे 'मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः' इत्यत्र 'शृङ्गाग्रलग्नाम्बुदैरावृताश्चित्रकूटोपान्तस्थलीः रत्नाकरमेखलाया देव्या भूमेः निरन्तरपयोधरत्वेन हृदये संभावयतीव कविः' इत्यस्माभिरुपवर्णितमाशयमिदं पद्यं द्रढयति ।

इह परिणतफलद्योतिभिः काननाम्रैः छन्नोपान्तस्याचलस्य शिखरमारूढेन मध्ये श्यामवर्णापादकेन मेघेनैव स्तनसादृश्यं संपाद्यते । सति चैवं मेघः, स्तनाद्बहिर्भूतः कामी कथं भवितुमर्हति? इति न विशदयति संजीविनी ॥ २८ ॥

स्थित्वा तस्मिन्वनचरवधूभुक्तकुञ्जे मुहूर्तं
तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः ।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥

विन्ध्यपादे विशीर्णाम्— अत्र पूर्णसरस्वतीमुख्या व्याख्यातारः 'पादाः प्रत्यन्तपर्वताः' इति व्याकुर्वन्ति । न जानन्तीवेमे महाकविनात्र प्रदर्शितमनितरसाधारणं भुवनविन्यास-

विज्ञानम् । विन्ध्यः खलु पुरा गुरोरगस्त्यस्य पुरतो दण्डवत्प्रणनाम । तदानीं तस्य चरणयोरेको जयायाम्, इतरश्चरणाद्यभिख्ये प्रदेशे (चुनादुर्गे) च निहितोऽभूत् । महर्षेर्निदेशानुरोधेनाद्याप्यनुत्थितवतो गिरिराजस्यास्य एकस्मिन्पादे विशीर्णेव दृश्यते रेवा । ऋजुतया प्रवहन्ती नर्मदा प्रणमतो विन्ध्यस्य पादेनैकेन प्रतिहतमार्गा कुत्रचिद्विशीर्णाभूदिति कवेराशयः । रेवाया विन्ध्यस्य च स्थितिः विमर्शस्यास्यावसाने प्रदर्शयिष्यमाणाद्भारतवर्षीयरेखालेख्यादवगम्येत सहृदयैः ।

इह संजीविनी वचनरवधूभिरनुशिक्षितेव रासिक्यम् 'एतेन कस्याश्चित्कामुक्याः प्रियतमचरणपातोऽपि ध्वन्यते' इति भावमाविष्कुर्वती, 'कान्तापादतलाहतिर्यथा कान्तस्य प्रमोदावहा तथा प्रियतमचरणपातोऽपि मोदावहः कुतो न भवत्यबलाजनानाम्' इत्यभिप्रैति । अत्र कामिनीचरणाघातादिभिः सद्यः कुसुमोद्गमादिकमनुभवन्तः अशोकादिपादपा एव प्रमाणम् । वस्तुतस्तु उत्तरार्धे कान्तेन विरहिताया: क्षीणक्षीणायाः महारण्ये शिलाभिर्विषमे प्रदेशे तपस्यन्त्याः कस्याश्चिन्नायिकायाः समाधिरभिव्यज्यते ॥

तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।

अन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥

'अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धूः' इत्युक्तरीत्या विन्ध्यपादे विशीर्णायाः (तस्याः) अतर्कितोपनतस्य वल्लभस्य (जीमूतस्य) दर्शनेन मुदितायाः गण्डूषसेकमिव त्वद्वान्तवृष्टिं सस्पृहमापिबन्त्याः मधुरघर्घरस्वनाया नायिकाया वक्त्रात्प्रणयमधुरमन्यादृशसुरभिपरिमलं सीधुपानं स्वयमप्यास्वाद्य हर्षनिर्भरो गच्छेः । एवं गच्छन्तं त्वामन्तःसारमत एवाजस्रं घनत्वेन भुवनेषु विदितमसूयाविष्टोऽप्यनिलः तुलयितुं न शक्ष्यति । सत्स्वप्यनेकधा स्वस्मिन्नपराद्धेष्वनुचरेषु रिक्त इत्यहमेव केवलं धनपतिक्रोधेन प्रेयसीविश्लेषं प्रापितः— इति ध्वनिरस्मिन्पद्ये स्फुटमुपलभ्यते ।

तिक्त-वान्त-तोय-अनिलपदैरावर्जितस्वान्ता संजीविनी आदौ वमनशीलस्य पुंसः पश्चाच्छलेष्मशोषणाय लघुतिक्तकषायाम्बुपानाल्लब्धबलस्य वातप्रकोपो न स्यादिति ध्वनिमाविष्कुर्वती वाग्भटात्प्रमाणवाक्यानि प्रदर्शयति । विद्युल्लताप्यत्र तया प्रलोभितेव पुष्टकामुकस्य स्वरनादोक्त्या चिकित्सानावश्यिकेत्यजानानेव परस्परविरुद्धं समाधिद्वयमस्माननुभावयति ॥ २० ॥

नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरूढै-
राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम् ।
दग्धारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥

अत्र ग्रीष्मोष्मसन्तप्तेषु नितरां शोषणमुपयातेषु तरुलतागुल्मादिषु शीकरासारवर्षेण क्रमेणाविर्भवन्तीं रमणीयां शोभां वर्णयन्कविः अन्यादृशं स्वभावोक्तिरसं पाययति रसिकान् । इत्थमेवान्यत्रापि 'गन्धश्च धाराहतपल्वलानां कादम्बमर्धोद्गतकेसरं च । स्निग्धाश्च केकाः शिखिनां बभूवुर्यस्मिन्नसह्यानि विना त्वया मे' इति वर्षासमयमुपवर्णयति ।

इह 'मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन्माम् । व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि' इति पद्यं दृष्टान्ततयोदाहरति विद्युल्लता । परमिह दृष्टान्तदार्ष्टान्तिकयोः बिम्बप्रतिबिम्बभावः कीदृशः? इति निपुणं निरूपयन्तोऽपि न जानीमो वयम् । अत्र वर्षासमये सर्वत्रोपलभ्यमानानि साधारणानि चिह्नान्युपात्तानि; उदाहृतस्थले तु रावणेनापहृतां जानकीमनुचिन्त्य शोकपरवशाभिः दर्भाङ्कुरनिर्व्यपेक्षाभिः अश्रुजलाप्लुतलोचनानि दक्षिणस्यां दिशि

व्यापारयन्तीभिर्मृगीभिः रामं प्रति सीतामार्गः सूचित इति कथितम् ॥

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमिव भवान्गन्तुमाशु व्यवस्येत् ॥

मैथिलीं प्रति यियासुर्मारुतात्मजः विश्रामहेतोरर्णवस्य मध्ये मैनाकादिषु पर्वतेषु न कुत्रापि कालक्षेपं कृतवान्किल । तद्वत् त्वयापि वर्तितव्यम् । अथापि नवे वयसि वर्तमानैः (शुक्लापाङ्गैः) चिरसंदर्शनानन्दजनितबाष्पबिन्दुभिः युवतिसार्थैः सबहुमानं प्रत्युद्गतो माननीयो भवान् कथं तासां प्रणयमधुरानालापान-नादृत्य गन्तुं व्यवस्येत्? तत्र तत्र विलम्बोऽपरिहार्य एव इत्याशयः ॥ २२ ॥

पण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नै-
र्नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ।
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः
संपत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥

भवत्संदर्शनानन्दनिर्भरेषु दशार्णेषु महानुत्सवो भविता । कैतकैः कुसुमैः परिणतजम्बूफलोपहारादिभिश्च भवतः क्रिय-

माणां सपर्यामसहमाना इव मरालाः कतिपयदिनस्थायिनो भविष्यन्ति— इति ध्वनिरुपलभ्यते ॥ २३ ॥

**तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं**
**गत्वा सद्यः फलमतिमहत्कामुकत्वस्य लब्धा ।**
**तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यत्त-**
**त्सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्म्याः ॥**

कल्याणलक्षणवतीति दिङ्मुखेषु प्रख्यातलावण्यां भूपालानामपि स्पृहणीयसौभाग्यां महानुभावां कांचिदुत्तमनायिकामनुनेतुं गच्छतः, अतिकामुकत्वात्तद्वार्ताहरां वेत्रवतीमितस्ततश्चरन्तीं दूतीं हठादभिसरतः कस्यचिन्नायकस्य समाधिरिहाभिव्यज्यते ॥

**नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो-**
**स्त्वत्संपर्कात्पुलकितमिवाप्रौढपुष्पैः कदम्बैः ।**
**यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-**
**मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥**

स्वयं तुङ्गः केवलमाख्यया नीचैरयं गिरिः, आम्रकूट इव समुद्रमेखलाया भुवः, प्रगल्भवनितात्वेन संभाविताया वेत्रवतीमेखलाया राजधान्या उद्दामं यौवनं प्रथयन् रोमाञ्चकञ्चुकितः पयोधर इवाभातीति कवेराशयः ॥

विश्रान्तः सन्व्रज वननदीतीरजानां निषिञ्च-
न्नुद्यानानां नवजलकणैर्यूथिकाजालकानि ।
गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात्क्षणपरिचितः पुष्पलावीमुखानाम् ॥

स्वयं किंचिदिव विश्रान्तः राजधान्याः नितरां सौभाग्यापादकानि कुसुमरमणीयान्युद्यानानि नवजलकणैर्निषिञ्चन् तामपि नायिकां सुखयेति गूढाशयः ॥ २६ ॥

वक्रः पन्थास्तव भवतु च प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥

इह कविरात्मनो जन्मभूमावन्यादृशं प्रणयं आर्यावर्तोद्देशस्थितिविषयकविज्ञानं चानितरसाधारणमुपदर्शयन्, तस्याश्च निरतिशयं सौभाग्यमनुवर्णयन्. सर्वनगरातिशायिनी सकलत्रिभुवनललामभूतेयमुज्जयिनी अवश्यं द्रष्टव्येत्युत्कण्ठां जनयति सहृदयानाम्; अनुस्मरतीव चोज्जयिन्याः सौधोत्सङ्गेषु विद्युद्दर्शनसंत्रासचटुललोचनाभिः पौराङ्गनाभिः सहासकृत्प्रवृत्तामात्मनो बालक्रीडां स्मर्यमाणमधुराम् ।

पद्यमिदमनुवाचयतामस्माकं 'यस्यामुत्तुङ्गसौधोत्सङ्गसङ्गिनीनामतिमधुरेण गीतस्वरेणाकृष्यमाणाधोमुखरथतुरङ्गमः पुरः पर्यस्तरथपताकः कृतमहाकालप्रणाम इव प्रतिदिनं लक्ष्यते गच्छन्दिवसकरः। यस्यां च सौधशिखरशायिनीनां पश्यन्मुखानि पुरसुन्दरीणां मदनपरवश इव पतितः प्रतिमाच्छलेन लुठति बहलचन्दनजलसेकशिशिरेषु मणिकुट्टिमेषु मृगलाञ्छनः।' इति भट्टबाणसूक्तिः स्मरणपदवीमधिरोहति ॥ २७ ॥

**वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः**
**संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः।**
**निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः संनिपत्य**
**स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥**

विदिशां राजधानीं गच्छन् वेत्रवतीमनिच्छन्तीमप्युपरुन्धन् कामुकत्वस्य सद्यः फलं लब्धवान्किल। अत्र तूज्जयिनीमुद्दिश्य प्रस्थितवतस्ते मार्गे निर्विन्ध्यानाम्नी वनिता वेश्येव नितरामात्मानं मण्डयन्ती किंचिदुपदर्शितनाभिमण्डला विविधैर्विलासैरनिच्छन्तमपि त्वामावर्जयिष्यतीति कवेराशयः ॥ २८ ॥

**वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः**
**पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः।**

**सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती**
**कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥**

चिरान्तरितदर्शनस्य वल्लभस्य विरहेण ताम्यन्त्याः, निकामं क्षीणायाः, अनादृतशरीरसंस्कारायाः, एकवेणीधरायाः, कार्श्येऽप्यधिकाधिकं सौभाग्यं व्यञ्जयन्त्याः, अप्रगल्भायाः, आगतेऽपि रमणे स्वयमभिगमनसाहसान्मरणमेव श्लाघ्यं मन्वानायाः कस्याश्चित् कुलकन्यकायाः समाधिरिह विभाव्यते ॥ २९ ॥

**प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धा-**
**न्पूर्वोद्दिष्टामुपसर पुरीं श्रीविशालां विशालाम् ।**
**स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां**
**शेषैः पुण्यैः कृतमिव दिवः कान्तिमत्खण्डमेकम् ॥**

अत्रोदयनो बद्धः; इह वासवदत्तया गान्धर्वविद्या शिक्षिता; तस्याश्चावासोद्देशोऽयम्; चण्डमहासेनस्यात्राभूत्प्रासादः; इदमेव तन्महाकालश्मशानं यत्र यौगन्धरायणाय ब्रह्मराक्षसो मन्त्रमुपादिक्षत्; अनेनैव पथा सह वसन्तकेन परिवर्तितरूपः स मन्त्री नगरमिदमगाहिष्ट; अत्रैव भद्रवती सा करेणुका महामात्रेणाषाढकेन सज्जीकृता; रजन्यां सह वासवदत्तया तामारुह्य निगूढमपसरता वत्सराजेनात्रैव भग्नः प्राका-

रखण्ड:' इत्याद्यावेदयितारो बहवो वृद्धा ऊज्जयिन्यां वर्तन्त इति निर्दिशन्महाकविः, इहोज्जयिनीं वासवदत्तास्थाने मनसि निवेश्य मेघस्य सर्वात्मना उदयनसाम्यं व्यञ्जयतीव। तथाहि—गान्धर्वविद्यानिपुणः तन्त्रीकलनिर्ह्रादैः श्रोतॄणां हृदयमावर्जयदुदयनः; मेघोऽपि श्रवणसुभगैर्मन्द्रगर्जितैर्मानसं सुखयति। वारनारीवक्त्रेन्दुप्रतिमालंकृतां सुरामापिबत्स राजा; अयमपि वेत्रवत्याः सभ्रूभङ्गान्मुखात्पयःपानमकरोत्। वत्सेश्वरश्चपलो गूढं विरतां नामान्तःपुरचारिकां विभ्रमैकरसां भेजे; मेघोऽप्युज्जयिनीसविधे संसर्पन्तीं दर्शितावर्तनाभिं निर्विन्ध्यामस्पृशत्। वासवदत्तया उपायनत्वेन प्रहितां लावण्यजलधेरुद्गतां श्रियमिव लोचनहारिणीं राजपुत्रीं बन्धुमतीं कुलकन्यकां स्वस्मिन्निबद्धरागामप्यनाविष्कृतप्रणयां विरहावस्थां व्यञ्जयन्तीं स्वयमेवोपायेनोपायंस्तोदयनः; तथैव सौभाग्यं विरहावस्थया व्यञ्जयन्तीं वेणीभूतप्रतनुसलिलां सिन्धुमुपाससारासावपि। वत्सराजस्य श्रीविशाला वासवदत्ता पूर्वोद्दिष्टैवेति बृहत्कथाकारो वदति; उज्जयिन्यपि मेघस्य 'वक्रः पन्थाः' इत्यस्मिन्पद्य एव पूर्वोद्दिष्टा समभूत्। वक्रेणैव मार्गेण वासवदत्तामासादितवानुदयनः; मेघोऽप्येवमेवोज्जयिनीम्। इह 'वक्रः पन्थास्तव भवतु च' चकारेण मेघस्योदयनसाम्यमाविष्करोति महा-

कविः । क्षीणपुण्यः शापाद्भुवमवतीर्णो महावंशोत्पन्नः कश्चित्स्वर्गनिवासी देव एवोदयनः ; मघोनः प्रकृतिपुरुषः कामरूपो भुवनविदिते वंशे जातो मेघोऽप्यद्य भुवं गतः । कुतोऽपि कारणात्क्षितावतीर्णा काचिद्दिव्याङ्गना किल वासवदत्ता ; उज्जयिन्यपि 'दिवः कान्तिमत्खण्डमेकम्' इति संभाव्यते कविना । एवं ह्यगाधगाम्भीर्यरमणीया महाकवीनामाशयाः । के वयमशेषान्विशेषान्परिमातुं रसखण्डेऽस्मिन्काव्ये ।

भट्टबाणोऽपि 'बृहत्कथाकुशलेन विलासिजनेनाधिष्ठिता विजितामरलोकद्युतिरवन्तिषूज्जयिनी नाम नगरी' इति वर्णयति कादम्बर्याम् ॥

दीर्घीकुर्वन्पटुमदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥३१॥

अत्रोज्जयिन्यां कलमधुरशिञ्जितकाञ्चीगुणकमनीयायाः सरसचन्दनचर्चापरिमलभरितायाः गोत्रस्खलितविलक्षेण पत्या पादपतनचाटुवचनादिना अनुनीयमानायाः कस्याश्चिन्नायिकायाः समाधिमिहाभिव्यञ्जयन्कविः 'तद्गोत्रस्खलितो देवीं पादलग्नः प्रसादयन् । लेभे सुभगसाम्राज्यमभिषिक्तस्तदश्रुभिः ॥' इति

भर्तुरन्तःपुरचारिकासङ्गकलुषितायाः वासवदत्तायाः प्रसादनाय प्रयुक्तप्रार्थनाचाटुकारमुदयनमेव स्मारयति ॥

जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः ।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखिन्नान्तरात्मा
खेदं नीत्वा ललितवनितापादरागाङ्कितेषु ॥३२॥

एवमेव 'स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायन्तनमल्लिकेषु । कामो वसन्तात्ययमन्दवीर्यः केशेषु लेभे बलमङ्गनानाम्' इति कामिनीनां तरुणहृदयावर्जकं प्रसाधनमन्यत्रापि वर्णयत्यसौ कविः ॥

भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डेश्वरस्य ।
धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥३३॥

इह कविः युवतीनां तोयक्रीडाप्रस्तावेन नाद्यापि घर्मः शान्त इति सूचयन् प्रथमदिवस एव यक्षेण मेघो दृष्ट इति द्योतयति ॥

अप्यन्यस्मिञ्जलधर महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः ।



स्त्रीशृंगार.

लक्ष्मी आर्ट–भायखळा, मुंबई.

**कुर्वन्संध्याबलिपटहतां शूलिनः श्लाघनीया-**
**मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥**

सायन्तने काले महाकालनिकेतनारामभूमिमनुप्राप्तः त्वं आप्रदोषपूजानिर्वर्तनमालय एव स्थित्वा ते मन्द्रगर्जितं सन्ध्याबलिपटहं कुरुष्व । एवंकरणे तवाविकलं फलमनुक्षणमेव भविष्यतीति प्रोत्साहयन्ननुपदमेव कीदृशं तत्फलमिति पद्येऽन्यस्मिन्विशदयति महाकविः । अत्र पूर्णसरस्वतीप्रमुखा व्याख्यातारः निरतिशयामुष्मिकफलदायकः वाग्विषयातीतः कश्चिदपूर्वस्थानीय ईश्वरप्रसाद एवाविकलं फलमित्यभिप्रयन्ति । परन्त्वेते, कामिनामामुष्मिकफललोलुपता नास्ति; तादृशफललाभवर्णनेन तेषां प्रोत्साहनं कर्तुमशक्यमिति विस्मरन्ति ॥

तत्कीदृशमिह कवेर्मनीषितं फलम्? इति चेत्—

**पादन्यासक्वणितरशनास्तत्र लीलावधूतै**
**रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।**
**वेश्यास्त्वत्तो नखपदसुखान्प्राप्य वर्षाग्रबिन्दू-**
**नामोक्ष्यन्ति त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् ॥**

महाकालस्य प्रदोषयात्रासमये सर्वाभरणभूषिता नयनसुभगा विलासविभ्रमावर्जितयुवजनमानसा वारवनिताः काश्चित्पादन्या-

सानुरणितरशनाकलापं मधुरगीतानुविद्धं नर्तनमारचयेयुः । काञ्चन लीलोद्धूतै रत्नच्छायाखचितवलिभिश्चामरैर्भवानीपतिं वीजयेयुः । तासां कुसुमसुकुमारेषु पादेषु पल्लवारुणेषु पाणिपङ्कजेषु च क्रमेणाविर्भवन्तीं ग्लानिमसहमानो रसिकस्त्वं स्वयमेव वर्षाग्रबिन्दुभिस्ताः सुखयन् तरुणजनचिरकाङ्क्षितानां वारविलासिनीनामलसवलितस्निग्धानामाकेकराणां कटाक्षाणां मुहूर्तमात्रं पात्रं भविष्यसि । किमितोऽप्यधिकं फलमभिलषणीयमिहास्ति विलासिजनानाम्? अहो! भाग्यं भवत इति ॥ ३५ ॥

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सांध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ।
नृत्तारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगः स्तिमितनयनं दृष्टभक्तिर्भवान्या ॥३६॥

'स्वयं विषयरसिकोऽपि पशुपतेः पश्चाद्भुजमण्डलान्तरेषु लग्नः सन्ध्याकपिशाभिर्निजदेहप्रभाभिः शूलपाणेर्नृत्तारम्भे रुधिरारुणकरिकृत्तिरूपावरणस्यानावश्यकतां जनयन्, आर्द्रहृदयाया भवान्या अनुग्रहमुपलभ्य गन्तासि' इति वर्णयन्महाकविः 'हन्त, विषयासक्तोऽयमिति केचन मामवजानन्ति; किमेभिर्वराकैरनात्मज्ञैः? ननु निखिलजगद्वन्द्या त्रिभुवनगुरोरप्यन्यादृशं माहाभाग्यमुपजनयन्ती देवी भवान्येव मदीयेन भक्त्यतिशये-



वेश्यांगनावलोकन.

लक्ष्मी आर्ट–भायखळा, मुंबई.

नावर्जितस्वान्ता विस्मयस्तिमितनयना वात्सल्यमसृणितैः कटाक्षैर्मा पवित्रीकरोति' इति स्वाभिप्रायमेवेहाविष्करोत्यन्वर्थनामा कालिदासः॥

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः।
सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वीं
तोयोत्सर्गस्तनितमुखरो मा स्म भूर्विक्लबास्ताः॥

पद्यमिदमनुवाचयतामस्माकं 'उन्नमति नमति वर्षति गर्जति मेघः करोति तिमिरौघम्॥ किं ते ह्यहं पूर्वरतिप्रसक्ता यत्त्वं नदस्यम्बुद सिंहनादैः। न युक्तमेतत्प्रियकाङ्क्षिताया मार्गं निरोद्धुं मम वर्षपातैः॥ यदि गर्जति वारिधरो गर्जतु तन्नाम निष्ठुराः पुरुषाः। अयि विद्युत्प्रमदानां त्वमपि च दुःखं न जानासि॥ आखण्डलस्य भवनोदरदीपिकेयमाख्याति ते प्रियतमस्य हि संनिवेशम्' इत्यादि वर्णयतः शूद्रकमहाकवेर्मधुरमधुरा भावाः स्मरणपदवीमास्कन्दन्ति॥

तां कस्यांचिद्भवनवलभौ सुप्तपारावतायां
रात्रिं नीत्वा चिरविलसनात्खिन्नविद्युत्कलत्रः।
सूर्ये दृष्टे पुनरपि भवान्वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः॥

रजन्यां चिरं सौदामन्या विहृत्यापररात्र एवोपलब्धस्वापस्य मेघस्य प्रत्युषस्येवोत्थानमशक्यमिति कृत्वा 'सूर्ये दृष्टे' इति निर्दिशन् 'कथमेकमपि दिवसमविश्रम्य प्रस्थातुं शक्यते?' इत्याशङ्क्य 'पूर्वमपि विद्युदेव खिन्ना न भवान्' इति सूचयन् 'पुण्यैरविगतामिमां श्रीविशालां विशालां सुचिरमनुपभुज्य कथमन्यत्र गमनं रोचेत रसिकाय?' इति भावं स्वयमेवोत्प्रेक्ष्य 'समुचित एवायं भवतो ह्यभिसन्धिः; अथापि मयि सौहार्देनाभ्युपेतकृत्यनिर्वहणायावश्यं निद्राविरतिरेव प्रस्थानारम्भसमयः करणीयः' इति निपुणं प्रार्थयते यक्षः ॥

तस्मिन्काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ।
प्रालेयास्रं कमलवदनात्सोऽपि हर्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥

अन्यासङ्गकलुषितस्वान्तानां खण्डितानां योषितां प्रसादनं प्रत्यूषेषु प्रियतमैः प्रार्थनाचाटुकारैरवश्यं करणीयमिति पूर्वोक्तमाशयमिह सम्यग्विशदयन्महाकविः, कमलानां भानुकरस्पर्शेनापाद्यमाना शोभा त्वया सर्वथा न विहन्यतामित्युपदिशन्, 'बालातपमिवाब्जानामकालजलदोदयः' इत्यात्मनः सूक्तिं स्मरणपथमुपनयति ॥

. 'ब्रह्माणं वार्कमीशानं विष्णुं वा द्वेष्टि यो जनः । श्रेयांसि तस्य नश्यन्ति रौरवं च भवेद्ध्रुवम् ॥' इति निषेधात्कार्यहानिर्भविष्यतीति ध्वनिमिहोत्पश्यति तपस्विनी संजीविनी ॥

गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
च्छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ।
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्या-
न्मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि ॥ ४० ॥

गम्भीरायाः पयसि च्छायात्मनो मेघस्यावगाहनेन नलिन्याः कमलवदनात्प्रालेयास्रमपमार्जयितुं प्रवृत्तस्य भानोरन्तरायो न भवेदिति 'कुमुदविशदानि' इत्यनेन सूचयन् उज्जयिनीतः प्रस्थितस्य बलाहकस्य गम्भीरारोधसः परिसरभुवा निर्गमनमार्गमावेदयति ।

एवं सुहृदो निर्बन्धादुज्जयिनीं विहाय प्रस्थितं मेघम् 'उदारप्रकृतेः प्रसन्नहृदयायास्त्वत्प्रतिकृतिमेवानारतं हृदयेनावहन्त्या गम्भीरायाः सरितः प्रणयभङ्गो न कार्यस्त्वयान्यत्राबद्धानुरागेणापि' इत्युपदिशन् 'अमत्सराशयामत्युदारस्वभावां प्रणयिनीं पद्मावतीं वासवदत्ताक्रान्तमानसोऽपि भवान्सुखयितुमर्हति' इति साभिनिवेशमुदयनमुपदिशन्तं यौगन्धरायणं स्मारयति यक्षः ।

तस्याः किंचित्करधृतामिव प्राप्तवानीरशाखं
  हृत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम् ।
प्रस्थानं ते कथमपि सखे लम्बमानस्य भावि
  ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः ॥

आप्तानामुपदेशावधीरणानभिज्ञतया पद्मावतीं रमयितुं प्रवृत्त-स्योदयनस्य क्रमेण तद्गुणरागविज्ञानेन यथा अमितः प्रणयः संजातः, तथैव गम्भीरायाः परिसरादन्यत्र गमनं रसग्राहिणस्ते न रोचेतेति वदन्महाकविः, गम्भीरायास्तटे सह वयस्यैः वानीरशाखाग्रेभ्यः उत्प्लुत्योत्प्लुत्य अगाधे सलिले निमज्जनोन्मज्जनरूपमसकृदनुष्ठितमात्मनो बालक्रीडादिकमिहानुस्मरतीति मन्यामहे ।

त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसंपर्करम्यः
  स्रोतोरन्ध्रध्वनितसुभगं दन्तिभिः पीयमानः ।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
  शीतो वातः परिणमयिता काननोदुम्बराणाम् ॥

'अन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वाम्' इति पूर्वोक्तमाशयमिह प्रकारान्तरेण वर्णयन् कविः, भवानीप्रसादमुपलभ्य गम्भीरायास्तोयमादाय देवगिरिमभियास्यतस्ते माहात्म्यं जानन् भक्त इव भीत इव विनीत इव त्वन्निष्यन्दसुरभेर्व-

सुधायाः परिमलमाजिघ्रन्वन्यमतङ्गजस्पर्शेन प्रथममात्मानं पवित्रीकुर्वन् काननोदुम्बरफलानि तवोपहारीकुर्वन् त्वत्प्रसादाकाङ्क्षी नीचैर्वास्यत्यनिलः इति निपुणं निर्दिशति ।

तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पैः साधु स्नपयतु भवान्व्योमगङ्गाजलार्द्रैः ।
रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः ॥४३॥

क्रौञ्चदारणेऽनितरसाधारणीमात्मनो भक्तिमाविष्कुर्वन् कविः, वासवीनां चमूनां रक्षाहेतोः संभृतं तेजस्त्वया वासवस्य प्रधानपुरुषेणात्यन्तं पूजनीयमिति ज्ञापयन्, कुमारस्य तेजस्त्रयादप्याधिक्यं द्योतयन् 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति श्रुतिप्रोक्तं वीर्यस्याहुतिरूपत्वम् 'हुतवहमुखे' इत्यनेनोपदिशति । एवमन्यत्रापि 'दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः' इति वर्णयति किल । अत्रेदमवधेयम्—ऐहिकसुखपराङ्मुखाः जरामरणादिदुःखभूयिष्ठामिमां कर्मभूमिं परित्यज्य ब्रह्मसायुज्यमधिजिगमिषवो भारतवर्षीयाः देहयात्रार्थमुपभुज्यमानमन्नकबलादिकं प्राणाहुतिरिति, भार्या देवतातिथिपूजादिनिर्वहणार्थमधिगता सहधर्मचारिणीति, निषेकादिक्रियां पितॄणाम् ऋणनिर्मोक्षसाधनस्य संतानस्यावाप्तये संभृता पञ्च-

माहुतिरिति, पित्रोरौर्ध्वदैहिकक्रियां पितृयज्ञ इति चानुतिष्ठन्ति— इति ।

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलक्षेपि कर्णे करोति ।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥ ४४ ॥

पूर्वस्मिन्पद्ये देवसेनापतिम् अत्यादित्यं तेज इति वर्णयन्निह तदधिष्ठितमयूरस्य बर्हे दृश्यमानं ज्योतिर्लेखावलयं तत्तेजःप्रतिफलनसंजातमिति भावयन्कविः, 'भवान्या पूर्वमेव भक्त इत्यभिनन्दितस्त्वं तमेव मयूरं नर्तयन् नृत्यदर्शनानन्दितेन गिरीशेन सादरमभिवीक्षितः नर्तनसमये स्वयं विगलितेन पुत्रतेजोवलयमावहता बर्हेण आत्मानं मण्डयन्त्या शर्वाण्या सत्कृतो भव' इति मेघं प्रोत्साहयति ।

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्य-
न्स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥

एवं शरवणभवमाराध्यातितुङ्गाद्देवगिरेः सत्वरं प्रस्थितवतः तव तीव्रगतिनिरीक्षणभीतैः स्कन्दमुपवीणयितुमन्तरिक्षे कृताव-

स्थानैर्वीणिभिः सिद्धद्वन्द्वैर्दत्तमार्गः, सुदूरमध्वानं प्लुतेनैकेनातीत्य, रन्तिदेवस्य कीर्तिमिवातिधवलां चर्मण्वतीमवतीर्य तां मानयन्नात्मानमपि पवित्रीकुरु इति वदति यक्षः । अत्र कविः बौद्धमतानुयायिभिः राजभिरत्यन्तं गर्हितः पश्वालम्भः आस्तिकैर्माननीय एवेत्युपदिशति ॥

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचोरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥

देवगिरिं समया गगनेऽवस्थिताः सिद्धाः प्रथमं वलाहकस्य मार्गं दत्त्वानुपदमेव 'कुत्राऽसौ गच्छति ?' इति विचिकित्सया यावद्दृष्टीः परावृत्य पश्यन्ति, तावन्मेघमनवलोकयन्तः, सुदूरान्तरभावतन्वीं प्रसन्नस्तिमितप्रवाहां जलादानार्थमवतीर्णेन मेघेन सनाथां चर्मण्वतीं अतिदवीयस्तया स्थूलमध्येन्द्रनीलं भुवो मुक्तागुणमिवाकलयेयुः ॥

अत्र चर्मण्वतीजलव्यतिकरेण विराजमानायां कालिन्द्यां शार्ङ्गिणो वारिविहारादिकमनुध्यायन्, चैत्ररथादनूनस्यावश्यं द्रष्टव्यस्य बृन्दावनस्य दूरेऽवस्थितत्वात्, कैलासं प्रति यियासोर्मेघस्य तेन पथा गमनवर्णने अनौचित्यमाकलयन् 'शार्ङ्गिणो

वर्णचोरे' इत्येतावता परितुष्यतीव देशावस्थितितत्त्वविन्महाकविः ॥

पद्यमिदम् 'एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरान्तरभावतन्वी। मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः' इत्यन्यत्र प्रोक्तमाशयमनुस्मारयति ॥

तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरि विलसत्कृष्णशारप्रभाणाम्।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम् ॥ ४७ ॥

इहापि व्रजसुन्दरीणां कुन्दक्षेपानुगमधुकरश्रीमुषां कटाक्षाणामात्मबिम्बं पात्रीकृतवतः श्रीमतो यदुनाथस्य संभावनैव दशपुरवधूविलोकितानां विषयभूते मेघे आरोप्यते इत्यहो! मानसी वृत्तिर्महाकवेः ॥

ब्रह्मावर्तं जनपदमधश्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥

इह महाकविः कुरुक्षेत्रे युयुत्सया समवेतानां पाण्डवानां कौरवाणां च प्रवृत्तं घोरमायोधनं निर्दिशन्, अतिरमणीयेनो-

पमानेन— कृष्णरूपिणा कालेन कबलितस्य राजन्यनिवहस्य निमित्तमात्रमभवत्सव्यसाची— इति सूचयन्, मेघेन चर्मण्वत्यां गृहीतस्योदकस्य कुरुक्षेत्रे वर्षणमप्यभिव्यञ्जयति ॥

हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां
बन्धुप्रीत्या समरविमुखो लाङ्गली याः सिषेवे ।
कृत्वा तासामभिगममपां सौम्य सारस्वतीना-
मन्तःशुद्धस्त्वमसि भविता वर्णमात्रेण कृष्णः ॥

'सारस्वतीनामपामनुसेवनेन अनपराधिनां कमलानामात्मनो धारापातैः कृतस्य क्षोभस्य प्रायश्चित्तं विधायान्तःशुद्धो भवितासि' इति मेघमुपदिशति यक्षः । 'वर्णमात्रेण कृष्णः' इत्यनेन 'लाङ्गली गौरवर्णः' इति द्योतयति च ॥

तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शंभोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५० ॥

भवान्या अपि स्पृहणीयसौभाग्यायां जाह्नव्यामात्मनो भक्तिमाविष्कुर्वन्, 'मूर्धानं पत्युरारोह प्रजया च विराड् भव' इत्यादिमन्त्रं स्मृतिपथमारोपयन्, यत्रेयं सुरसरित् हिमालया-

भुवमवतरति तं प्रदेशमन्तःशुद्धो गच्छेति बलाहकमादिशति यक्षः । प्रालेयाद्रेरुपतटे विराजमानं कनखलं नाम नगरं गत्वा शैलराजादवतरणशोभां जाह्नव्याः साक्षात्कृतवतामेव पद्य-स्यास्य रामणीयकं स्पष्टीभवेदिति मन्यामहे ॥

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।
संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययासौ
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥ ५१ ॥

पूर्वम् 'वर्णमात्रेण कृष्णः' इति सरस्वतीसलिलानुसेव-नेनापि मेघस्य शरीरे नीलिमानमापादितं निर्दिश्य, अत्र कविः कृष्णवर्णायाः कालिन्द्याः, अन्तःसलिलाया अदृश्यरूपायाः सरस्वत्याः, शुभ्राया जाह्नव्याश्च मेलनं स्वसंकल्पेन कारयित्वा गङ्गाया अवतरणस्थल एव त्रिवेण्यन्तरं सृजन्, 'क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य । पश्यानवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः ॥' इत्यादिकमन्यत्र प्रोक्तमाशयमनुस्मारयन्, 'अपारे खलु संसारे कविरेकः प्रजापतिः' इत्यभियुक्तोक्तिमनुभावयति भावुकान् ॥

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।

वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥

पद्यमिदमनुवाचयतामस्माकम् 'विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः । दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः' इत्यन्यत्रोक्तो ह्याशयः स्मरणपदवीमास्कन्दति । अचलस्य वृषसाम्यमन्यत्रापि 'दृप्तः ककुद्मानिव चित्रकूटः' इति प्रादर्शि किल महाकविना ॥

तं चेद्वायौ सरति सरलस्कन्धसंघट्टजन्मा
बाधेतोल्काक्षपितचमरीवालभारो दवाग्निः ।
अर्हस्येनं शमयितुमलं वारिधारासहस्रै-
रापन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ॥

पर्वतेष्वनोकहानां मिथःसंघट्टजन्मना वायुवेगात्तूर्णं परितः प्रसरता दवाग्निना तदा तदा जायमानं हरिणादीनामुपद्रवं वर्णयन् यक्षः, मेघस्य हिमालयप्राप्तिनिरूपणावसरे निकटवर्तिनो निजावासस्य स्मरणेन कुबेरेणात्मनो विषयेऽनुष्ठितं पापमनुस्मरन्, प्रकारान्तरेण 'अधमाः असूयालवः अन्योदयासहिष्णवः वित्तमदमत्तचित्ताः निर्निमित्तमेव मादृशानां विलासिजनानामार्तिं जनयन्ति' इति धनपतिं गर्हयतीव; 'परस्परविमर्दोद्भूतहर्षातिरेकाः केचन कलहोपजीविनः पिशुनाः दवाग्नय

इव धनपतिभवनाभ्यन्तरेषु कृतनिलयाः प्रकृष्टवंशजानामुदारस्वभावानां निष्कारणवैरिणो जाग्रति' इति सूचयतीव च ॥

ये संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मि-
न्मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम् ।
तान्कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णा-
न्केषां न स्युः परिभवफला निष्फलारम्भयत्नाः ॥

वनगजभ्रमेण वलाहकमभिधावतां शरभाणां भाविनं परिभवं वर्णयन् यक्षः—मृगप्रायैरुदरंभरिभिः कलहोपजीविभिरगणितापरोपतापैरवलेपदुर्दान्तैराविष्टो धनपतिः स्वयं सत्त्वात्प्रच्यावितोऽभूत् । तरुणीललामभूता मत्प्रेयसी तूदारस्वभावा मामेवानवरतमनुध्यायन्ती मदीयं मङ्गलमेवाशंसमाना प्रतीक्षमाणा च शापस्यावसानवेलामनुक्षणमुपचीयमानप्रणयप्रसरा 'प्रवासाश्रयात् स्नेहो न कदाप्यपचीयेत' इत्यस्य दृष्टान्तायमाना पिशुनानां मनोरथान् समूलोच्छेदं नाशयन्ती 'एवं खलु सतीमणिभिर्वर्तितव्यम्' इत्युपदिशति लोकस्य— इत्यात्मनो हृदयगह्वरगोपितमाशयमन्यापदेशरीत्या व्यञ्जयतीव ॥

तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः
शश्वत्सिद्धैरुपहृतबलिं भक्तिनम्रः परीयाः ।

यस्मिन्दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
कल्पिष्यन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः॥५५॥

एतादृशैर्दुर्विनीतैराक्रान्तोऽयं हिमालयः अस्मादृशैर्दूरतः परिवर्जनीय इति कदाचिन्मेघस्य मनसि वैरस्यं भवेदित्याकलयन् यक्षः, चराचरगुरोश्चरणन्यासेन सर्वतः पवित्रीकृतोऽसौ गौरीगुरुः ब्रह्मनिष्ठैरखिलसुरासुरवन्दनीयैः सिद्धैर्नित्यमनुसेवितः त्वया भक्तिनम्रेणोपासितः भवतः स्थिरगणपदप्राप्तये कल्पेतेति पयोदं प्रोत्साहयन् तत्पदाभिगमो विलासिजनानामप्यत्यन्तं स्पृहणीय एवेत्यनुपदमेवान्यस्मिन्पद्ये विशदयति सम्यक् । तुमुलकरकावृष्टिपातैः शरभान् परिपीडयन्मेघः, तरुणेन्दुशेखरस्य चरणन्यासप्रदक्षिणीकरणेन तादृशहिंसाजनितपापेभ्यः सद्य एव विनिर्मुक्तो भविष्यतीत्यपि सूचयतीत्यहो! मानसी वृत्तिर्महाकवेः ॥

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः
संरक्ताभिस्त्रिपुरविजयो गीयते किंनरीभिः ।
निर्ह्रादी ते मुरज इव चेत्कन्दरेषु ध्वनिः स्या-
त्संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥५६॥

'पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः' इत्युक्तरीत्या महानटस्य सेवाप्रकारमिह सम्यग्विशदयन्महाकविः, स्तनितश्रव-

णानन्दितस्य कार्तिकेयमयूरस्य नृत्तमपि मनस्याकलय्य संगीतार्थस्य साफल्यं व्यञ्जयतीव ॥

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान्विशेषा-
न्हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम् ।
तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
श्यामः पादो बलिविमथनाभ्युद्यतस्येव विष्णोः ॥

'आत्मनः स्वरूपसंकोचेन क्रौञ्चरन्ध्रप्रवेशे नितरां क्लेशोऽनुभूयेत; किमर्थमिदमाचरणीयं मयेति कदाचिद्विमनीभवेदसौ वलाहकः' इति स्वयमेवोत्प्रेक्ष्य 'आश्रितजनसंरक्षणाय खलु त्रिविक्रमो वामनीबभूव; इह तु आर्तस्यानन्यगतिकस्य मम प्रणयं मानयन् निरुपाधिकप्रेमार्द्रहृदयः महान्तं क्लेशमङ्गीकुर्वन्भवान् त्रिविक्रममप्यतिशेते' इत्याशयं मेघप्रोत्साहनाय व्यङ्ग्यसरण्या निपुणमुपक्षिपति यक्ष इत्यहो! रामणीयकमुपमानस्य ॥

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसंधेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥

इह बाह्योद्यानस्थितहरशिरश्चन्द्रिकया नित्यविकासभाजां

कुमुदानामवस्थितिं भावयन्कविः कैलासशृङ्गाणां कुमुदसादृश्यं वर्णयति; कैलासं च त्रिदशवनितादर्पणत्वेनानुवर्णयन्, महीधरस्यास्य निरतिशयं सौभाग्यमवगमयति ॥

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यः कृत्तद्विरदरदनच्छेदगौरस्य तस्य ।
शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्री-
मंसन्यस्ते सति हलभृतो मेचके वाससीव ॥

कैलासस्य धवलिमानं सदृशवस्तुनिर्देशेन विशदयितुं प्रक्रान्तः कविः प्रथमं दर्पणेन तमुपमयन्, 'निश्वासादिभिरनुक्षणं मलिनीभवन्नयं मुकुरः न समीचीनः' इति तमेव कुमुदैरनन्तरमुपमिमानः, तत्रापि नैमित्तिकं विकासमाकलय्यापरितुष्टः पुनर्गिरिशाट्टहासेन सदृशं भावयन्, तस्यापि कादाचित्कतामनुस्मरन् पद्येऽस्मिन्सद्यः कृत्तद्विरदरदनच्छेदेन सदृशयन्, तावताप्यसंतुष्टः, वर्णयितुमशक्येयमद्रेः शोभा सहृदयैः स्तिमितनयनप्रेक्षणीयैवेत्युद्गिरन्, तस्यैव गाम्भीर्यादिधर्मान्तराणि लक्षीकृत्य गौराङ्गेण हलभृतोपमिमीते— इत्यहो! गाम्भीर्यमनितरसाधारणं महाकविभणितीनाम् ॥

हित्वा तस्मिन्भुजगवलयं शंभुना दत्तहस्ता
क्रीडाशैले यदि च विचरेत्पादचारेण गौरी ।

भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी ॥६०॥

भवान्या पूर्वमेव दृष्टभक्तिस्त्वं कैलासमद्य दिष्ट्याऽधिगतः पादचारेण विचरन्त्या गौर्याः कठिनशिलातलस्पर्शं चरणयोरसहमानः, आत्मनः शरीरं सोपानत्वेन परिणमयन् तस्या वात्सल्यमसृणितानां कटाक्षाणां पात्रीभवन्नात्मानं पवित्रीकुरु—— इत्युपदिशन्, मृडान्याः सर्वात्मना दास्यमात्मन इहाविष्करोति भक्तिपरवशः कालिदासः ॥

तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ।
ताभ्यो मोक्षस्तव यदि सखे घर्मलब्धस्य न स्या-
त्क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भाययेस्ताः ॥

पूर्वं कदाचिदुज्जयिनीं गतस्त्वं महाकालस्य प्रदोषपूजासमये ते मन्द्रगर्जितं संध्याबलिपटहत्वेन परिणमयन् वनिताललामभूतानां वेश्यानां मधुकरश्रेणिदीर्घाणां कटाक्षाणां पात्रीभूय अविकलं फलं लब्धवान्किल । पश्यतु तावदिदानीमाद्यरसाभिभूतहृदयो भवान् 'कीदृशं फलं भवानीपरिचर्यायाः' इति । मृडानीचरणपङ्कजस्पर्शसमनन्तरमेव क्रीडालोलाभिः सुरयुवति-

भिरहमहमिकया परिरब्धः, अनितरसुलभान्भोगान्प्राप्नुवन्, ताभिः सप्रणयं सकौतुकं च सहैव गृहाभ्यन्तरं नीतो भविष्यसीत्यहो! महिमा भवानीसपर्यायाः । किं ज्योतिष्टोमादिभिरधिकायाससाध्यैः? किं वा नितान्तशोषितकरणग्रामेण तपसा? किमन्यैरपि संदिग्धफलैरुपासनैः? इति स्वाशयं प्रकटीकरोति महाकविः ॥

एवमतर्कितोपनतान्निरतिशयसुखलाभाद्विस्मृतान्यकर्तव्यस्य, मदनशरशरव्यतामुपयाताभिः त्वदीयच्छायोपगूढावयवाभिः सुरयुवतिभिरादरातिशयेनानुक्षणमुपलालितस्य भवतो हृदयादभ्युपपन्नं सुहृत्कार्यं नियतमपसरेदिति बिभेमि । तदङ्ग, किंचिदिव मदर्थे समालम्ब्य धृतिम्, संस्तभ्यात्मानम्, परित्यज्य तरलताम्, दूरीकृत्य देवकामिनीदाक्षिण्यम्, आश्रित्यानिच्छयापि नैष्ठुर्यम्, अभ्यस्य स्वरपरिवर्तनाम्, परुषीकृत्य निसर्गतः श्रवणसुभगान्यपि मन्द्रगर्जितानि, भाययित्वा च रमणीयमपि तरुणीसार्थम्, कथंकथंचिदात्मानं मोचयन्नलकाभिमुखो गच्छेत्यतिकरुणं प्रार्थयते यक्षः ॥

हेमाम्भोजप्रसवि सलिलं मानसस्याददानः
कुर्वन्कामात्क्षणमुखपटप्रीतिमैरावतस्य ।

धून्वन्कल्पद्रुमकिसलयान्यंशुकानि स्ववातै-
नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम् ॥६२॥

सुरवनिताभ्य आत्मानं मोचयित्वा अलकाभिमुखं प्रस्थितवतस्ते मार्गे प्रथमं कनककमलभासुरमविज्ञातकालुष्यं मानसं सरोवरं नयनगोचरीभविष्यति इति वदन् यक्षः—इह निर्मलाम्भसि तोयक्रीडाव्यापृतमैरावतम्, कुबेरस्योद्यानमुच्छृङ्खलं प्रविष्टस्य तस्य चेष्टाभिः संक्रुद्धेन धनपतिना विहितमात्मनः प्रेयसीवियोगादिकं चानुस्मरन्, 'ननु स्वैरं विहरतां गजानां चेष्टादिकं प्रवालशोभेव पादपानां नगेन्द्रस्य भूषणमित्यविज्ञायारसिकशिरोमणिरसौ धनपतिः, मां प्रियतमया विश्लेषं प्रापयत्किल; अद्य तु त्वया निर्मलमम्भः स्वैरं पीत्वा महावातं सहायमुपलभ्य चैत्ररथे कुसुमद्रुमाणामुच्छेदो निर्दयं करणीयः; कं वा शपेदनुचरमिदानीमनभिज्ञोऽयं गुह्यकेश्वरः?—इति साकूतं सूचयतीत्यभिनन्दन्ति रसिकाः ॥

'नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम्' 'तं तमात्माभिलाषं निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु' इत्यादिभिः, अनवद्यदिव्योद्यानसरोविहारगीतानुसेवनवारुणीरसास्वाददयितापरिरम्भणादिसुखपारतन्त्र्यादेवात्मनः स्वाधिकारप्रमादादिकं समभूदिति द्योतयन्— सखे जलद! मुनीनामपि

मदजनकमिदमुद्यानवरं चैत्ररथं नामात्यन्तमलभ्यमल्पपुण्यानाम्; विकचकनककमलभासुरमिदं सरोवरमतिनिर्मलमप्यमन्दरजोविकारमुपजनयत्यमरमिथुनानाम्; नगेन्द्रोऽयमतिरमणीयः सुखानुभवतृष्णामादधाति शोषितकरणग्रामाणां नियतात्मनामपि; बालारुणकोमलान्यमरतरुकिसलयानि प्रसभमर्पयन्ति रागमरागिणामपि;—— इति स्वानुभवमेवेह प्रकारान्तरेणावगमयति यक्षः ॥

इममेवाशयमन्यत्रापि 'बृन्दावने चैत्ररथादनूने निर्विश्यतां सुन्दरि यौवनश्रीः' इति वर्णयति महाकविः ॥

तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारी ।
या वः काले वहति सलिलोद्गारमुच्चैर्विमानै-
र्मुक्ताजालग्रथितमलकं कामिनीवाभ्रबृन्दम् ॥

एवमात्मनानुभूतपूर्वान्भोगाननुस्मारितो यक्षः, हेमपल्लवसंस्तरे स्वीयमुत्सङ्गमधिशयानां विगलितांशुकां शिथिलालकां प्रेयसीं हृदयेनालिखन्, नन्वियमलकैव प्रणयिनः कैलासस्योत्सङ्गे कामिनीव सविस्रम्भमनवरतं शयाना 'सर्वर्तुसांनिध्येनाजस्रं शोभमानेऽस्मिन्नुद्देशे महर्षयोऽप्यवशा भवेयुः' इति

व्यञ्जयन्ती, अभिज्ञतमस्य कामचारिणस्ते मानसं नियतमावर्जयिष्यत्येव; किं पुनरभिज्ञानान्तरनिर्देशेनेति निपुणमुपसंहरन्नलकाप्रवेशायाभ्रं प्रोत्साहयति मधुरमधुरया सूक्तिसरण्या ॥

इति मेघसंदेशे प्रथमाश्वासः ॥

---*---

## ॥ द्वितीय आश्वासः ॥

---

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
संगीताय प्रहतमुरवाः स्निग्धपर्जन्यघोषम् ॥
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ १ ॥

एवं मानसं सरोवरमवगाह्य चैत्ररथमुपवनं यथाकाममुपभुज्य अलकां प्रविष्टस्य रसिकजनमौलेर्भवतः प्रथममेव लोचनपथमुपयाताः अभ्रंलिहाग्राः प्रासादाः, सरसविलासपेशलाभिर्वनिताभिः, कमनीयविविधवर्णसंक्रान्तिदर्शनीयैः चित्रैः, हृदयावर्जकैः मधुरमधुरैः संगीतनादैः, प्रभातरलाभिः स्निग्धेन्द्रनील-

मरकतादिमणिमयभूमिभिः सर्वथा भवन्तमेवानुकुर्वन्तः, 'नगर्यामस्यामचेतनानामपि रासिक्यमीदृशं चेत्, किमिव हि भवेत् नितान्तधन्यानामधिगतकलाकलापानां नगरमिदमधिवसतां यक्षमिथुनानाम्' इति कौतूहलमसंशयं जनयेयुः प्रेक्षकाणां मनसि, इति द्योतयन्, 'सखे जलद! भोगभूमावस्यां प्रियाविधुराणामवकाशो न दीयेत, अतस्त्वया सह विद्युतैव प्रवेष्टव्यम्' इत्यादावेव निपुणमुपदिशति यक्षः ॥

अत्र यथैव जलदोदरसंधिलीनया सौदामन्या समुपेतः पर्जन्यः दर्शनीयतरः भवति, तथैव रसिकजनरसायनमिदं काव्यम् अन्यादृशीं सुषमामापादयतोत्तरमेघेन रसवत्तरमाभातीति ध्वनयन्, 'विद्युत्वन्तम्' इत्यारभ्य श्रोत्रपेयमिमं भागं 'मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः,' इत्यवसाययन् उपक्रमोपसंहारवैखरीमन्यादृशीमाविष्करोति महाकविरिति मन्यामहे ॥

हस्ते लीलाकमलमलका बालकुन्दानुविद्धा
नीता लोध्रप्रसवरजसा पाण्डुतामाननश्रीः ।
चूडापाशे नवकुरवकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥२॥

पूर्वस्मिन् पद्ये प्रथमं निर्दिष्टानां ललितवनितानां सौभाग्या-

तिशयमिह संकल्पस्य विषयीकुर्वन् नायकः 'भोः किमर्थमेवं सह विद्युतैव प्रवेष्टव्येयमलकेति निर्बन्धः क्रियते? न मे किंचिदिह तथा प्रविष्टस्य प्रयोजनमस्ति; अपि चेयं सौदामनी नितान्तचञ्चला मदीयामभ्यर्थनामप्यवधीर्य 'नाहमनुगच्छेयं त्वामन्यार्थे यतमानम्' इति कुत्रचिल्लीना भवेत्' इति मेघस्य विचिकित्सा स्यादिति स्वयमेवोत्प्रेक्ष्य, 'कुसुमसधर्माण इमा योषितः नानाविधैः प्रसूनैरात्मानं मण्डयन्त्यो भवन्तमादरातिशयेनोपतिष्ठेरन्; तदानीं ताः यथोचितं संभावयितुं नास्ति चेन्निकटे त्वदीया सहधर्मिणी तर्हि त्वामरसिक इति मन्येरन्निमाः यक्षललनाः' इति सूचयन्, 'ललितललितानां लावण्येनातिशयिततटिल्लतानामेतासां भवति बहुमानं दृष्ट्वा स्वयमेव लज्जिता शिक्षिता च समीचीनां सरणिं नियतमात्मनश्चञ्चलां प्रकृतिं परित्यजेत् विद्युदपि' इति द्योतयन्, अनुत्तमसौकुमार्यवतीः ताः समवलोक्य 'यक्षेण मे महदुपकृतमित्यपि संभावना भवेत्तव मनसि' इति च ध्वनयन् सहृदयान् रसयति ॥

यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि
ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः ।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतिं
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ३ ॥



मदिरापान.

लक्ष्मी आर्ट—भायखळा, मुंबई.

उत्तमस्त्रीणां प्रस्तावेन तासां सह प्रियतमैः प्रासादेषु भोगानुसेवनप्रकारादिकमनुस्मारितो यक्षः ‘हर्म्येष्वस्याः कुसुमसुरभिषु’ इत्युज्जयिनीनिरूपणावसरे स्वोक्तस्याशयमिह सम्यग्विवृण्वन्, मणिमयभुवां प्रासादानां संनिवेशरामणीयकोपन्यासमुखेन यक्षमिथुनानाम् उद्दामान्युन्मादकारीणि च यौवनानि प्रथयन्, संनिवेशरामणीयकेनाङ्कुरितां, मेघस्य स्निग्धगम्भीरघोषश्रवणेन पल्लवितान्, अन्यादृशसुरभिपरिमलस्य मधोः सेवनेन विजृम्भितां भोगतृष्णामनुवर्णयन्, ‘विविक्तविस्रम्भरसो हि कामः’ इति सूक्तेरर्थमनुसंधापयति ॥

अत्रेदमवधेयम्—महाकविरसौ पूर्वमेघे, प्रथमं ‘कान्ताविरहगुरुणा’ इत्युपक्षिप्य उत्तरमेघं च ‘विद्युत्वन्तम्’ इत्यारभते । ततः ‘अबलाविप्रयुक्तः स कामी’ इति निर्दिश्य इह द्वितीये पद्ये प्रकृष्टसौकुमार्यवतीरबलाः वर्णयति । अनन्तरम् ‘अन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ’ इति प्रस्तुत्य अत्र तृतीये अन्तर्बाष्पस्यास्य ध्यानविषयीभूतमन्येषां यक्षाणाम् उत्तमस्त्रीसहायानां भोगानुसेवनप्रकारं निर्दिशन् ‘मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः’ इत्यादिना प्रोक्तमाशयमिह ‘आसेवन्ते मधु रतिफलम्’ इत्यादिना विशदयतीति मन्यामहे ॥

नीवीबन्धोच्छ्वसनशिथिलं यत्र बिम्बाधराणां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपा-
न्ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ४ ॥

'प्रत्यासन्ने नभसि दयिताजीविताल्म्बनार्थी' इति पूर्वोक्त-माशयमनुसंधाय, बिम्बाधराणां मानिनीनामात्मनः सखीनां यक्ष-वनितानां प्रियतमैः सह भोगसाम्राज्यलक्ष्मीमनुक्षणमनुभूयमा-नामनुचिन्त्यानुचिन्त्य नितरां दूयमानमानसायाः वल्लभविरहेण ताम्यन्त्याः प्रेयस्या एकोच्छ्वासावशेषितं जीवितं यक्षेणोत्प्रेक्षि-तमिह निपुणमुद्गृणाति महाकविः ॥

पद्यस्यास्य व्याख्यानावसरे निरुपममात्मनो रासिक्यमावि-ष्करोति विद्युल्लता ॥

नेत्रा नीताः सततगतिना यद्विमानाग्रभूमे-
रालेख्यानां नवजलकणैर्दोषमुत्पाद्य सद्यः ।
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा यन्त्रजालै-
र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ ५ ॥

महाकविः पूर्वमेघे 'धूमज्योतिःसलिलमरुतां संनिपातः'

इत्यादिनानुवर्णितं मेघस्य स्वरूपमिहानुसंदधानः, 'नेत्रा नीताः धूपोद्गारानुकृतिनिपुणास्त्वादृशाः' इति निर्दिशन्, मेघसदृशा गम्भीरप्रकृतयः केचन सज्जना अपि दुर्मेधोभिराविष्टाः प्रेरिताश्चावशमपथे प्रवर्तमानाः, आलेख्यभित्तिगतानां महापुरुषाणां सावित्रीप्रभृतीनां रमणीमणीनां च प्रतिकृतिदर्शनेन स्वकीयां प्रकृतिमनुसारिताः, शङ्कास्पृष्टाः स्वेदजलक्लिन्नगात्रयष्टयः जर्जरा बहिर्निष्पतन्तीति बोधयन्, रजोनिमीलिताः श्रुतवन्तः कदाचिदपथे पदमर्पयन्तोऽपि प्रायेण आत्मनः स्खालित्यमनुपदमेवावगच्छन्तः स्वीयां प्रकृतिं प्रपद्यन्ते' इत्यादि बहूपदिशति लोकस्य ॥

अत्र च गूढपुरुषैः रहस्यभूमिं प्रापितानां क्षुद्रमार्गैर्निष्क्रामतां जाराणामितिवृत्तमिहोत्पश्यन्ती संजीविनी अत्युदारचरिताय महावंशोत्पन्नाय वलाहकाय द्रुह्यतीति किंचिदिव विमनीभवामः ॥

यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गिताना-
मङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।
त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥

'दूरबन्धुर्गतोऽहम्' इति यक्षोक्तिमनुस्मारयन् अन्योन्या-

श्लेषसुखितानां यक्षमिथुनानां रमणीयां स्थितिमिह नायकमुखेन वर्णयन् महाकविः, 'न केवलमहिंसा परमो धर्मः; परं तु अन्येषां सुखानुभवस्य न कदाप्युपरोधः साक्षात् परम्परया वा करणीयो विवेकिभिर्धर्मसूक्ष्मतां जानद्भिः विलासिजनैः' इत्युपदिशति ॥

नगर्यामस्यां कामिनीभिः सकृदेव प्रियतमाः व्रियन्ते। 'प्रियतम एव हि वरणीयो भवति'। तेषां च मिथुनानां प्रतिक्षणमेधमानानुरागकल्लोलितान्तरङ्गाणाम् अन्योन्यविलासविभ्रमानुभवेषु न कदाप्यलंबुद्धिरुपजायते। अपरैः विलासिजनैः धूर्ताविष्टैर्गूढमुपरुद्धा अपि इमा मानिन्यः न कदाप्यपथे मतिं प्रवर्तयन्ति। हठाभिसरणप्रवृत्तानामपि प्रयत्नः तासु निरर्थकः परिभवफलः केवलं संरोध एव पर्यवस्यति' इत्यहो! दांपत्यमन्यादृशममरमिथुनानामिमां पुरीमधिवसताम् ॥

मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तं
प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम्।
सभ्रूभङ्गप्रहितनयनैः कामिलक्षेष्वमोघै-
स्तस्यारम्भश्चतुरवनिताविभ्रमैरेव सिद्धः ॥ ७ ॥

पूर्वम् 'धनपतिक्रोधविश्लेषितस्य' इत्युक्तं यक्षवचनमनुसा-

रयन्निह महाकविः, 'अविज्ञातसौकुमार्यवृत्तान्तः अगणितपरोपतापः रसिकजनशत्रुः किलासौ धनपतिः; तस्य सखाऽयं पशुपतिर्विषमलोचनः स्मरहरः; द्वयोरपि सांनिध्येन भीतभीतः कुसुमेषुः कृच्छ्रादिमं प्रदेशमुपतिष्ठति; अथापि अनुत्तमलावण्यवतीनाममरवनितानां विभ्रमविलासादिभिः स्पृहणीयावासमिदं नगरं विरागिणामपि रागमुपजनयतीत्यत्र मनोभवविरोधिनं वशिनामुत्तमं संयमीन्द्रं शूलिनमपि विलासविभ्रमैरावार्जितवती मानिनीमणिः देवी भवान्येव दृष्टान्तीभवति' इति ध्वनयन्, 'तां वीक्ष्य सर्वावयवानवद्यां रतेरपि ह्रीपदमादधानां । जितेन्द्रिये शूलिनि पुष्पचापः स्वकार्यसिद्धिं पुनराशशंसे ॥' इत्यन्यत्र श्रूयमाणामात्मनः सूक्तिं स्मरणपथमारोपयन् सहृदयान् रसयति ॥

**तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं**
**दूराल्लक्ष्यं त्वदमरधनुश्चारुणा तोरणेन ।**
**यस्योद्याने कृतकतनयः कान्तया वर्धितो मे**
**हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः ॥ ८ ॥**

पूर्वम् 'त्वामारूढं पवनपदवीम्' इत्यादिना गगनाङ्गणमारोपितं पर्जन्यमिहादावात्मनो गृहोपकण्ठोद्यानाङ्गणे सरसमवता-

रयन्, 'त्वदमरधनुश्चारुणा' इत्यनेन मेघस्य मनसि महान्तं कौतुकमुपजनयन् यक्षः, संनद्धेऽपि मेघे विरहविधुरां पराधीनवृत्तिना आत्मनोपेक्षितां प्रेयसीमनुशोचन्, 'समयेऽस्मिन् मानिनीनां मरणमेव जीवितं, जीवितं पुनर्मरणम्' अथापि आधारबन्धप्रमुखैः प्रयत्नैः सुतनिर्विशेषं संवर्धितस्य स्नेहसर्वस्वभूतस्य बालमन्दारवृक्षस्य कृते कृच्छ्रात् प्राणधारणं कुर्यादियम् इति निश्चिन्वन्, तमेव बालमन्दारम् अभिज्ञानत्वेन कण्ठतो निर्दिशन्, अस्मिन्नेव शैले 'अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन । यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥' इत्यन्यत्र महाकविना उपवर्णितं देवदारुं स्मारयति ॥

पद्यमिदमनुध्यायतामस्माकं पुण्डरीकविनाशश्रवणानुक्षणमेवोन्मुक्तजीवितं प्रेयांसं चन्द्रापीडमनुसर्तुमुद्यतायाः 'पुत्रकस्य मे भवनाङ्गणे सहकारपोतस्य त्वया मच्चिन्तयैव माधवीलतया सह उद्वाहमङ्गलं स्वयमेव निर्वर्तनीयम्; मच्चरणतललालितस्याशोकविटपस्य कर्णपूरार्थमपि न पल्लवः खण्डनीयः; मत्संवर्धितायाः मालत्याः कुसुमानि देवतार्चनायैवोच्चेयानि; मया स्वयं रोपिताश्चूतवृक्षाः यथा फलं गृह्णन्ति तथा संवर्धनीयाः' इति मदलेखामभिदधानायाः कादम्बर्या भाषितं हृदयगह्वरमापूरयति ॥

वापी चास्मिन्मरकतशिलाबद्धसोपानमार्गा
हैमैः स्फीता कमलमुकुलैर्दीर्घवैडूर्यनालैः ।
यस्यास्तीरे कृतवसतयो मानसं संनिकृष्टं
न ध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥

प्रेयस्याः हेमकुम्भस्तननिःसृतैः पयोभिः संवर्धितस्य मन्दारपोतस्य प्रस्तावेन, पयसामादानाय मरकतशिलाबद्धसोपानमार्गां कनककमलभासुरां रमणीयां वापीमवतरन्तीनां कटीतटनिवेशितकनककुम्भानां मरालगमनानामितस्ततो विचरन्तीनां गतिवैचित्र्यदर्शनेनावर्जितस्वान्ताः तीरे कृतवसतयो हंसाः विस्मृत्य मानसावाससुखम् , अविगणय्य च त्वयि शात्रवभावम् , बाह्यकरणव्यापाररोधिनं सान्द्रमानन्दमनुभवन्तीति वर्णयन् यक्षः, तादृश्याः वाप्यास्तीरं दैवयोगेन नीताः विलासिजनाः तमेवोद्देशं बहुमन्यन्ते, तत्रैव सर्वोत्कर्षबुद्धिं कुर्वन्ति, तस्मादन्यत्र नोपसर्पन्ति, तमेवानुध्यायन्ति, तत्रैव निवसन्ति इति सूचयन् , यथैव नयनसुभगाः बलाकाः खे भवन्तमाबद्धमण्डला आसेवन्त, तथैवेह रमणीयामिमां वापीमाबद्धमण्डलाः हंसाः व्यपगतशुचः विस्मृतान्यकर्तव्याः सेवन्ते इति हृदये संभावयतीव ॥

कविरसौ 'तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः' इति पूर्वोक्तमाशयमनुसंधायैवेह 'मानसं संनिकृष्टं न ध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः' इति निपुणं वर्णयति ॥

**तस्यास्तीरे विहितशिखरः पेशलैरिन्द्रनीलैः**
**क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।**
**मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण**
**प्रेक्ष्योपान्तस्फुरिततटितं त्वां तमेव स्मरामि ॥ १० ॥**

पूर्वमेघे 'तां चावश्यं दिवसगणनातत्पराम्' इति पद्ये प्रेयस्याः जीवितं प्रति तत्तदमङ्गलमाशङ्क्य, आशातन्तुनैकेन कृच्छ्रात्प्राणान् धारयेदियमित्यात्मानमाश्वासयन्नपि इह कमनीयया कनककदल्या निरन्तरमुपगूढं क्रीडाशैलं हृदयावर्जकमुद्वीक्ष्य प्रतिक्षणमुपचीयमानानङ्गवेदनाजर्जरितशरीरा पेशलाङ्गी गेहिनी कदाचित् प्राणानप्युत्सृजेदिति भावयन् यक्षः, नितरां कातरेण चेतसा किमप्यवचनीयमालिखन्, 'ननु उपान्तस्फुरिततटितं मेघं यदृच्छया निरीक्षमाणस्य मे ईदृशी दुरवस्था संपन्ना; एवं सत्युपवने सर्वात्मना विद्युत्वन्तं वलाहकमनुकुर्वन्तं कनककदलीसमालिङ्गितं क्रीडाशैलम् अजस्रं नयनपथातिथीभूतमनुपश्यन्त्या सुकुमाराङ्ग्या तया कथं वा




**कुमारीक्रीडावन.**

लक्ष्मी आर्ट–भायखळा, मुंबई.

जीवितुं शक्यते' इति रणरणकेनाक्रान्तहृदयः, आत्मना दत्तहस्तया क्रीडाशैले पादचारेण विचरन्त्या प्रियतमया सह सकौतुकमनुसेवितानि रतिपरिमलोद्गारीणि शिलावेश्मान्यनुस्मरतीति मन्यामहे ॥

रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरवकवृतेर्माधवीमण्टपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहलच्छद्मनास्याः ॥

इत्थमनुभूतपूर्वान्भोगान्मुहुर्मुहुरनुचिन्तयन् यक्षः, तस्मिन्नेव शैले प्रियतमापादपङ्कजस्पर्शमुखमदिरास्वादसुखादिकमनुस्मारितः, 'पूर्वं यथा मेघस्य रमणीयेन दर्शनेन श्रवणसुभगेन गर्जितेन बलाका मही च गर्भभरालसा समुद्भिन्नकन्दलकुसुमा च समभूताम्, तथैवेह उत्तमवनितायाः स्पृहणीयपादस्पर्शेन आस्वाद्यया वदनमदिरया च रक्ताशोकः केसरश्चोद्भिन्नकिसलयः बहुलपरिमलकुसुमपुञ्जकञ्चुकितश्चानन्दयतः प्रेक्षकान्' इति व्यञ्जयतीव ॥

तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।

तालैः शिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥

प्रियसखं शैलमापृच्छय आत्मनो निमित्ते दवीयांसमध्वानं विलङ्घ्य अनतिपरिचितमिमं प्रदेशमुपगच्छन्तं भवन्तं संभावयितुमुपतिष्ठमानः तवाप्याप्ततमः नीलकण्ठो नाम कश्चन सुहृदत्यन्तं हर्षभराक्रान्तहृदयः चिरपरिचितप्रदेशत्यागेन तदा तदा जायमानामुत्कण्ठां ते विनोदयिष्यति' इति मेघं प्रोत्साहयन् यक्षः, यथैव 'रघुपतिपदैरङ्कितो रामगिरिः' जनानामत्यन्तं पूजनीयः, तथैव प्रेयसीपदैरङ्कितः क्रीडाशैलः नितरामात्मनो बहुमानपदमिति सूचयन्, मेघदर्शनानन्देन नृत्यन्तं नीलकण्ठमुद्वीक्षितुं कदाचिदात्मनः प्रेयसी गृहाद्बाहिरागच्छेदिति मन्त्रयतीवात्यन्तं कातरेण चेतसा ॥

एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथा
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा ॥
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥

पूर्वस्मिन् पद्ये 'दिवसविगमे' इत्यनेनैव हृदये संभावितां आत्मनो वियोगेन विरतोत्सवस्य संवत्सरपरिमितायां दीर्घरा-




यक्षगृह.

लक्ष्मी आर्ट—भायखळा, मुंबई.

न्त्यां गाढान्धतमसे निमग्नस्य भवनस्य निःश्रीकतामिह रमणीयेन दृष्टान्तेन विशदयन् यक्षः, 'प्रालेयास्रं कमलवदनात् सोऽपि हर्तुं नलिन्याः' इत्यादि पूर्वोक्तमाशयमनुस्मारयन्, 'मार्गं तावच्छृणु कथयतः' इत्यारब्धं रामगिर्याश्रमादात्मनो भवनद्वारपर्यन्तं मार्गानुवर्णनं 'एभिः साधो' इत्यनेनोपसंहरन्, यथैव कमलिनी सूर्यादन्यत्र न रमते तथैवात्मनः प्रेयस्यपीति मनोरथशतैर्निश्चिन्वन्, 'साधो' इत्यनेन मेघे आत्मनः कृतज्ञतामाविष्कुर्वन्, परदुःखासहत्वं परार्थैकफलप्रवृत्तिमत्त्वं च साधूनां लक्षणमिति चोपदिशति ॥

**गत्वा सद्यः कलभतनुतां शीघ्रसंपातहेतोः**
**क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः ।**
**अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं**
**खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ १४ ॥**

पूर्वमेघे 'अद्रेः शृङ्गं हरति पवनः' इति पद्ये शरीरमभिवर्धयन्नद्रिरिव गगनाङ्गणमापूरयन् मुग्धसिद्धाङ्गनाभिश्चकितचकितमभिवीक्षितः खमुत्पतेति प्रोत्साह्य प्रस्थापितं मेघम्— इह तनुं कलभप्रमाणं संक्षिप्याम्बरान्निपत्य रम्यसानौ क्रीडाशैले निषीदेति प्रार्थयन्यक्षः, अर्णवं लिलङ्घयिषुं निष्प्रमाणशरीरं चार-

णाचरितं पन्थानमुत्पतन्तं त्रस्तान्विद्याधरान् स्त्रीगणैः सह सुदूरं विद्रावयन्तं 'एष पर्वतसंकाशो हनूमान्मारुतात्मजः। तितीर्षति महावेगः समुद्रं मकरालयम्' इति विद्याधरमिथुनैश्चकितचकितमनुमोदितं मकरालयं प्लुतेनैकेनातिक्रम्य विराजमानं 'ततः स लम्बस्य गिरेः समृद्धे विचित्रकूटे निपपात कूटे' इत्याद्यनुवर्णितं प्रभञ्जनसुतं स्मारयति ॥

महता तेजःपुञ्जेन विजृम्भमाणां सौदामनीमुद्वीक्ष्य तन्वी मे प्रेयसी नितान्तं कातरा भवेत्; अतस्त्वमल्पाल्पभासं विद्युदुन्मेषदृष्टिमेवान्तर्भवने पातयितुमर्हसि' इत्यतिकरुणं याचमानोऽसौ गुह्यकः द्रावयति मानसं कठिनचेतसामपि।

तेजोमयीं विद्युतमन्यत्रापि 'व्यलोकयन्नुन्मिषितैः तडिन्मयैर्महातपःसाक्ष्य इव स्थिताः क्षपाः, इति दृष्टित्वेन रूपयति महाकविः ॥

तन्वी श्यामा शिखरदशना पक्वबिम्बाधरोष्ठी
मध्येक्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥ १९ ॥

दुःखसंतप्तामश्रुपूर्णमुखीं मैथिलीम् 'उपावसपरिश्रान्तां कृशां तन्वङ्गीम्' इति वर्णयत्यादिकविः । शोकसंतापदीनाङ्गीं यक्षवनिताम् 'तन्वी' इति निर्दिशत्यसौ महाकविः ॥

परिम्लानप्रभां कनकवर्णाङ्गीं सीताम् 'श्यामां कमलपत्राक्षीम्' इति वर्णयत्यादिकविः । भर्तृदर्शनलालसां बालामिमामबलाम् 'श्यामा शिखरदशना' इति निर्दिशत्यसौ कविः ॥

एकवेणीधरां निश्वासबहुलां जनकनन्दिनीम्' 'तां नीलकेशीं बिम्बोष्ठीम्' 'तस्याः पुनर्बिम्बफलाधरोष्ठम्' इत्यनुवर्णयति प्राचेतसः । दिवसगणनातत्परां यक्षवनितामिमाम् 'पक्वबिम्बाधरोष्ठी' इति भावयति कालिदासः ॥

नियतामिव तापसीं भूमावासीनां राममहिषीम् 'तनुमध्यमाम्; सुमध्याम्' इति निर्दिशति मधुमयभणितिर्महर्षिः । विहाराहारनिःस्पृहामिमामङ्गनाम् 'मध्ये क्षामा' इति वर्णयति भवानीभक्तः कालिदासः ॥

प्रियं जनमपश्यन्तीं सुविभक्ताङ्गीं जानकीम् 'मृगकन्यामिव त्रस्तां वीक्षमाणां समन्ततः' इत्यनुशोचति भारत्याः स्वयंवृतपतिः कविकोकिलः । शत्रुभूयिष्ठे प्रदेशे निवसन्तीमेकाकिनीममरवनिताम् 'चकितहरिणीप्रेक्षणा' इत्यनुध्यायति सरस्वत्याः द्वितीयं हृदयमसौ कविसार्वभौमः ॥

किं बहुना? 'त्वां कृत्वोपरता मन्ये रूपकर्ता स विश्वसृट्' इति सीतादेव्या निरुपमं लावण्यं शंसत्यादिकविः। असावपि 'या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः' इति यक्षवनितायाः सौभाग्यमनितरसाधारणमवबोधयति ॥

पूर्वमेघे 'येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते' इत्युक्तमाशयमनुसंदधान इव महाकविरिह श्यामेयं तन्वी तनुलता स्निग्धधवलारुणदन्तपङ्क्त्या पक्वबिम्बाधरोष्ठच्छव्या चातितरां कान्तिं पुष्णातीति हृदये संभावयतीव ॥

इममेवाशयम् 'श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातम्' इति विशदयत्यन्यत्रापि महाकविः ॥

यथा निपुणश्चित्रकारः अपूर्वां रमणीयदर्शनाकारां मानिनीमणिं रेखाभिश्चित्रफलके विलिखति, तथैवासौ महाकविः स्पृहणीयदर्शनामुत्तमां काञ्चिद्वरवर्णिनीमस्माकं हृदयफलके सुदृढमालिखति ॥

**तां जानीयाः परिमितकथां जीवितं मे द्वितीयं**
**दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।**
**गाढोत्कण्ठागुरुषु दिवसेष्वेषु गच्छत्सु बाला**
**जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा ॥ १६ ॥**



यक्षस्त्री.

लक्ष्मी आर्ट—भायखळा, मुंबई.

यथैव कृषिफलं त्वय्यायत्तमिति प्रीतिस्निग्धैर्जनपदवधूलोचनैः सस्पृहमभिवीक्षितस्त्वमासीः, तथैव मय्यायत्तमात्मनो जीवितमिति आन्तरेण चेतसा मामेवानवरतमनुध्यायन्ती अपारयन्ती च निवारयितुमतिगुर्वीमुत्कण्ठामुज्जृम्भमाणामेतेषु दिवसेषु अनभिज्ञेयस्वरूपा मे प्रेयसी कथंकथञ्चिद्दिवसानतिवाहयेदिति अनुशोचति प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी ह्यस्तमितमहिमा यक्षः ॥

पद्यस्यास्य व्याख्यानावसरे पूर्णसरस्वतिः महाकवेः पदप्रयोगचातुरीं सरसमुपदिशन् रसिकजनास्वाद्येन वाग्गुम्भेन आत्मानं विनोदयन् 'रामायणरसायनपरायणेन च कवीन्द्रेण तदर्थचमत्कारतत्परतया तदर्थच्छायायोनिरर्थोऽस्मिन्पद्ये निवेशितः । स यथा 'हिमहतनलिनीव नष्टशोभा व्यसनपरंपरया निपीड्यमाना । सहचररहितेव चक्रवाकी जनकसुता कृपणां दशां प्रपन्ना ॥' इत्युपसंहरन् हृदयमावर्जयति सहृदयानाम् ॥

नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियाया
निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ।
हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वा-
दिन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्ति ॥ १७ ॥

'बाष्पाम्बुपरिपूर्णेन कृष्णवक्राक्षिपक्ष्मणा । वदनेनाप्रसन्नेन निश्वसन्तीं पुनः पुनः ॥ मलपङ्कधरां दीनां मण्डनार्हाममण्डिताम् । प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम् ॥' इत्येवं मैथिलीं शोककर्शितामनुवर्णितवतः प्राचेतसादधिगतसंस्कार इव महाकविः यक्षवनितायाः शोचनीयां स्थितिं हृदयेनालिखन् स्वयं रोदिति क्रन्दयति चास्मान् ।

'यथैव निरन्तरासारवर्षेणोपप्लवः प्रशमितो भवति, तथैव प्रबलरुदितैरेव पटुप्रसरः शोकः किञ्चिदिव प्रशममुपयाति' इति बोधयन्कविः हस्तन्यस्ततया लम्बालकतया च छन्नोपान्तमस्या मुखमसकलव्यक्ति सदपि रसिकजनमनोरञ्जकं भवतीति सूचयन् 'रेणुकणधूसरैरश्रुजलार्द्रकपोलसंदानितैर्विमुक्तव्याकुलैः शिरोरुहैरुपरुद्धमुखीं निर्दयाक्रन्दजर्जरस्वरक्षयक्षामाम्' महाश्वेतां स्मारयति ॥

आलोके ते निपतति पुरा सा बलिव्याकुला वा
 मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ।
पृच्छन्ती वा मधुरवचनां शारिकां पञ्जरस्थां
 कच्चिद्भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति ॥१८

यथा वल्लभाविरहेण नितान्तं क्षीणा कामिनीव पयस्विनी रेवा सर्वात्मना तव सादृश्यमावहन्तं परिणतगजप्रेक्षणीयं



यक्षचित्रलेखन.

लक्ष्मी आर्ट–भायखळा, मुंबई.



विरहानुभूतविस्मृति.

लक्ष्मी आर्ट—भायखळा, मुंबई.

विन्ध्याद्रिमुपगम्य तस्य पादे विशीर्णा कथंकथंचिदात्मानं संस्तभ्य तपश्चरणक्लेशमनुभवन्तीवादृश्यत, तथैवेह मदीयं मङ्गलमाशंसमाना बलिना दैवतान्यनुदिनं तर्पयन्ती, मत्सादृश्यविनोदनेन, मत्संबन्धिन्या वार्तया, रहस्यसंदेशदूत्या मत्प्रियया शारिकया समालापेन च कालमतिवाहयन्ती वे भ्रातृजाया नियतं साधोस्ते लोचनपथमुपयास्यति इति जीमूतमुद्बोधयन्यक्षः 'लिखन्तीनां दयिताकारानविस्तीर्णे महीमण्डलम्, गणयन्तीनां वल्लभगुणानल्पीयसी सङ्ख्या, शृण्वतीनां प्रियतमकथामबहुभाषिणी सरस्वती, ध्यायन्तीनां प्राणसमागमसुखानि ह्रसीयान्कालो हृदयस्यापतति' इत्यादिभट्टबाणसूक्तिं स्मृतिपथमारोपयति ॥

उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।
तन्त्रीरार्द्रा नयनसलिलैः सारयित्वा कथंचि-
द्भूयो भूयः स्वयमधिकृतां मूर्च्छनां विस्मरन्ती ॥१९॥

पूर्वं त्वद्वान्तवृष्टिं सस्पृहमापिबन्त्या नर्मदायास्तोयादानाय प्रवृत्तस्य भवतो यावानन्तस्तोषः समजनि ततोऽप्यधिकमानन्दोऽनुभूयतेऽद्य उत्कण्ठिताया हृदयानुगुणां वयस्यामिव

वीणामुत्सङ्गे कुर्वतीं मद्गोत्राङ्केन गेयेनात्मानं विनोदयितुमुत्सुकां बालां प्रेयसीमनुस्मरता मया ॥

एवमेव कदाचित्तस्या गेयश्रवणानन्दविस्मृतस्वामिनियोगो-ऽहं रिक्त इत्यरसिकेन धनपतिना शप्तः इति सूचयन् यक्षः 'अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते' इत्यस्यार्थ-मनुभावयति भावुकान् ॥

किंच, दग्धारण्यसदृशेऽद्य निःश्रीके भवनाङ्गणे सारङ्गा-क्ष्याः सजलनयनायास्तस्या इयमेकैव वीणा वल्लभनामाङ्कितेन गेयेन प्राणधारणमार्गमुपदेक्ष्यतीति सूचयन् भूयो भूयो विस्मृ-तायां मूर्च्छनायां भङ्कुरो वीणानादः, स्वागतशब्दस्थाने निवे-शनीयो भवता दयमानेन चेतसा इति प्रार्थयत इव यक्षः ॥

**शेषान्मासान्विरहदिवसस्थापितस्यावधेर्वा**
**विन्यस्यन्ती भुवि गणनया देहलीमुक्तपुष्पैः ।**
**मत्संयोगं हृदयनिहितारम्भमास्वादयन्ती**
**प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥ २० ॥**

भवत्संदर्शनानन्दनिर्भरेषु दशार्णेषु केतकैः कुसुमैः परिणतजम्बूफलोपहारादिभिश्च भवतो महती सपर्या कृता किल । मयापि कुटजकुसुमैः प्रत्यग्रैरर्घः प्रथमदर्शने भवतः

कल्पितोऽभूत् । इतोऽप्यधिकं पूजाविधिं कर्तुं जानात्येवैषा मे सहधर्मचारिणी । अथापि प्रायेणैतेषु दिवसेषु अस्तमितबाह्य-करणव्यापारा मत्स्नेहसंविदवलम्बितजीविता देहलीदत्तपुष्पैः शेषान्मासान् केवलं गणयन्ती मुग्धेयं मलिनवसना आर्द्रा-न्तरात्मना भवता मर्षणीयैव, इति सूचयन् यक्षः 'तया दे-हलीदत्तानि कुसुमान्येव पुष्पाञ्जलित्वेन हृदये संभावयितुमर्ह-सि' इति पर्जन्यं प्रार्थयते ॥

कल्याणलक्षणवतीं भूपालानामपि स्पृहणीयसौभाग्यामुत्तम-नायिकां गुणैरावर्जितवतो रसिकरसिकस्यात्युदारप्रकृतेरभिज्ञस्य जीमूतवरस्य रमणविरहेष्वङ्गनानां स्थितिः कीदृशीति अन्येन नोपदेष्टव्यम, इत्यपि ध्वनयति ॥

**सव्यापारामहनि न तथा पीडयेद्विप्रयोगः**
**शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते ।**
**मत्संदेशैः सुखयितुमलं पश्य साध्वीं निशीथे**
**तामुन्निद्रामवनिशयनासन्नवातायनस्थः ॥ २१ ॥**

पूर्वं विदिशानाम्नीमुत्तमनायिकां प्रीणयितुं गच्छन् प्रथमं नीचैराख्ये गिरौ किंचिदिव विश्रान्तस्तत्र समयं प्रतीक्ष-माणः सायं नवजलकणैस्तामानन्दितवान् किल । तथैवेहापि

'बाष्पाम्बुपरिपूर्णेन कृष्णवक्राक्षिपक्ष्मणा । वदनेनाप्रसन्नेन निश्वसन्तीं पुनः पुनः ॥ मलपङ्कधरां दीनां मण्डनार्हाममण्डिताम् । प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम् ॥' इत्येवं मैथिलीं शोककर्शितामनुवर्णितवतः प्राचेतसादधिगतसंस्कार इव महाकविः यक्षवनितायाः शोचनीयां स्थितिं हृदयेनालिखन् स्वयं रोदिति क्रन्दयति चास्मान् ।

'यथैव निरन्तरासारवर्षेणोपप्लवः प्रशमितो भवति, तथैव प्रबलरुदितैरेव पटुप्रसरः शोकः किञ्चिदिव प्रशममुपयाति' इति बोधयन्कविः हस्तन्यस्ततया लम्बालकतया च छन्नोपान्तमस्या मुखमसकलव्यक्ति सदपि रसिकजनमनोरञ्जकं भवतीति सूचयन् 'रेणुकणधूसरैरश्रुजलार्द्रकपोलसंदानितैर्विमुक्तव्याकुलैः शिरोरुहैरुपरुद्धमुखीं निर्दयाक्रन्दजर्जरस्वरक्षयक्षामाम्' महाश्वेतां स्मारयति ॥

आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ।
पृच्छन्ती वा मधुरवचनां शारिकां पञ्जरस्थां
कच्चिद्भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति ॥१८

यथा वल्लभविरहेण नितान्तं क्षीणा कामिनीव पयस्विनी रेवा सर्वात्मना तव सादृश्यमावहन्तं परिणतगजप्रेक्षणीयं



विरहानुभूतविस्मृति.

लक्ष्मी आर्ट—भायखळा, मुंबई.

विन्ध्याद्रिमुपगम्य तस्य पादे विशीर्णा कथंकथंचिदात्मानं संस्तभ्य तपश्चरणक्लेशमनुभवन्तीवादृश्यत, तथैवेह मदीयं मङ्गलमाशंसमाना बलिना देवतान्यनुदिनं तर्पयन्ती, मत्सादृश्यविनोदनेन, मत्संबन्धिन्या वार्तया, रहस्यसंदेशदूत्या मत्प्रियया शारिकया समालापेन च कालमतिवाहयन्ती वे आतृजाया नियतं साधोस्ते लोचनपथमुपयास्यति इति जीमूतमुद्दोधयन्यक्षः 'लिखन्तीनां दयिताकारानविस्तीर्णे महीमण्डलम्, गणयन्तीनां वल्लभगुणानल्पीयसी सङ्ख्या, शृण्वतीनां प्रियतमकथामबहुभाषिणी सरस्वती, ध्यायन्तीनां प्राणसमागमसुखानि ह्रसीयान्कालो हृदयस्यापतति' इत्यादिभट्टबाणसूक्ति स्मृतिपथमारोपयति ॥

उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।
तन्त्रीरार्द्रा नयनसलिलैः सारयित्वा कथंचि-
द्भूयो भूयः स्वयमधिकृतां मूर्च्छनां विस्मरन्ती ॥१९॥

पूर्वं त्वद्वान्तवृष्टिं सस्पृहमापिबन्त्या नर्मदायास्तोयादानाय प्रवृत्तस्य भवतो यावानन्तस्तोषः समजनि ततोऽप्यधिकमानन्दोऽनुभूयतेऽद्य उत्कण्ठिताया हृदयानुगुणां वयस्यामिव

वीणामुत्सङ्गे कुर्वतीं मद्गोत्राङ्कन गेयेनात्मानं विनोदयितुमुत्सुकां बालां प्रेयसीमनुस्मरता मया ॥

एवमेव कदाचित्तस्या गेयश्रवणानन्दविस्मृतस्वामिनियोगोऽहं रिक्त इत्यरसिकेन धनपतिना शप्तः इति सूचयन् यक्षः 'अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते' इत्यस्यार्थमनुभावयति भावुकान् ॥

किंच, दग्धारण्यसदृशेऽद्य निःश्रीके भवनाङ्गणे सारङ्गाक्ष्याः सजलनयनायास्तस्या इयमेकैव वीणा वल्लभनामाङ्कितेन गेयेन प्राणधारणमार्गमुपदेक्ष्यतीति सूचयन् भूयो भूयो विस्मृतायां मूर्च्छनायां भङ्गुरो वीणानादः, स्वागतशब्दस्थाने निवेशनीयो भवता दयमानेन चेतसा इति प्रार्थयत इव यक्षः ॥

**शेषान्मासान्विरहदिवसस्थापितस्यावधेर्वा**
**विन्यस्यन्ती भुवि गणनया देहलीमुक्तपुष्पैः ।**
**मत्संयोगं हृदयनिहितारम्भमास्वादयन्ती**
**प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥ २० ॥**

भवत्संदर्शनानन्दनिर्भरेषु दशार्णेषु केतकैः कुसुमैः परिणतजम्बूफलोपहारादिभिश्च भवतो महती सपर्या कृता किल । मयापि कुटजकुसुमैः प्रत्यग्रैरर्घः प्रथमदर्शने भवतः

कल्पितोऽभूत् । इतोऽप्यधिकं पूजाविधिं कर्तुं जानात्येवैषा मे सहधर्मचारिणी । अथापि प्रायेणैतेषु दिवसेषु अस्तमितबाह्य- करणव्यापारा मत्स्नेहसंविदवलम्बितजीविता देहलीदत्तपुष्पैः शेषान्मासान् केवलं गणयन्ती मुग्धेयं मलिनवसना आर्द्रा- न्तरात्मना भवता मर्षणीयैव, इति सूचयन् यक्षः 'तया दे- हलीदत्तानि कुसुमान्येव पुष्पाञ्जलित्वेन हृदये संभावयितुमर्ह- सि' इति पर्जन्यं प्रार्थयते ॥

कल्याणलक्षणवतीं भूपालानामपि स्पृहणीयसौभाग्यामुत्तम- नायिकां गुणैरावर्जितवतो रसिकरसिकस्यात्युदारप्रकृतेरभिज्ञस्य जीमूतवरस्य रमणविरहेष्वङ्गनानां स्थितिः कीदृशीति अन्येन नोपदेष्टव्यम्, इत्यपि ध्वनयति ॥

सव्यापारामहनि न तथा पीडयेद्विप्रयोगः
शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते ।
मत्संदेशैः सुखयितुमलं पश्य साध्वीं निशीथे
तामुन्निद्रामवनिशयनासन्नवातायनस्थः ॥ २१ ॥

पूर्वं विदिशानाम्नीमुत्तमनायिकां प्रीणयितुं गच्छन् प्रथमं नीचैराख्ये गिरौ किंचिदिव विश्रान्तस्त्वं समयं प्रतीक्ष- माणः सायं नवजलकणैस्तामानन्दितवान् किल । तथैवेहापि

दिवसमखिलं क्रीडाशैल एव विश्रम्य रात्रौ निशीथे सदाचारां मे प्रेयसीं मत्संदेशैः सुखयेति प्रार्थयन् यक्षः 'कान्तोपान्तात्सुहृदुपगमः संगमात्किंचिदूनः' इति निर्देक्ष्यमाणमाशयमिह चेतस्याकलयन् 'सर्वसाधारणी विदिशा; इयं साध्वी तु न तथा, भवादृशैर्माननीयैरपि माननीयेयं महानुभावा मे सहधर्मचारिणी' इति सूचयन् रसिकानामावर्जयति मानसम् ॥

आधिक्षामां विरहशयने संनिषण्णैकपार्श्वां
प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः ।
नीता रात्रिः क्षणमिव मया सार्धमिच्छारतैर्या
तामेवोष्णैर्विरहमहतीमश्रुभिर्यापयन्तीम् ॥ २२ ॥

इह महाकविः आधिक्षामाया यक्षवनितायाः कृपणां दशां विशदयितुमुपक्रान्तः, यथैव संपूर्णाभिः कलाभिरत्यन्तं रमणीया शशाङ्कस्य तनुरम्बरतलमखिलमात्मनो विलसितैरलंकृत्य कालेन सुराणां निमित्ते क्षीणक्षीणा नितान्तं तन्वी कलामात्रशेषा प्राचीमूले गव्यूतिमपि गन्तुमसमर्था समुपलभ्यते, तथैवेयमपि मन्दभाग्यस्य यक्षस्य निमित्ते तन्वी समभूत् इति वर्णयन्, गगनविहारिणां देवतात्मनामपीदृशी दुरवस्था चेत् किमुत कर्मवशगानां पराधीनवृत्तीनां जीवानामित्युपदिशन्,




विरहावस्था.

लक्ष्मी आर्ट–भायखळा, मुंबई.

-कलामात्रशेषा ओषधीनाथस्य तनुर्यथा पुनरपि महतीमभि-
-वृद्धिं प्राप्नोति तथैवास्या अपि अल्पीयसैव कालेनाभ्युदयप-
-रम्परा समेष्यतीति सूचयन्, पूर्वमुज्जयिन्यां विद्युद्दामस्फुरि-
-तचकितानां सह रमणैः सौधाङ्गणेषु विहरन्तीनां पौराङ्गनानां
-दर्शने यावानन्तस्तोषः समजनि ततोऽप्यधिकं दुःखमनुभूवते-
-मामाधिक्षामां स्थण्डिलशायिनीं रमणरहितां दीनां यक्षवनिता-
-मनुपश्यता रसिकरसिकेन पयोधरेणेति हृदये संभावयतीव ॥

निश्वासेनाधरकिसलयक्लेशिना विक्षिपन्तीं
शुद्धस्नानात्परुषमलकं नूनमागण्डलम्बम् ।
मत्संयोगः कथमुपनमेत्स्वप्नजोऽपीति निद्रा-
माकाङ्क्षन्तीं नयनसलिलोत्पीडरुद्धावकाशाम् ॥२३॥

कल्पान्तोदितसहस्रकिरणेभ्योऽपि कठोरतरेण विरहानलेना-
-नुदिनं संतप्यमानप्रतीकेयं तपस्विनी मे प्रेयसी वल्लभसमागमसं-
-विधानकरणचतुरां तैस्तैरुपायैरतिधीरमपि नायकं वशीकृत्य प्रण-
-यिनीपादमूलमानयन्तीं नर्मसखीमिव स्थितां निद्रां पुनःपुनराका-
-ङ्क्षन्त्यपि प्रायो भग्नमनोरथा अप्रतीकारदारुणया रुजया परिभू-
-यते इत्यनुशोचन् यक्षः 'निद्रा हि नामेयं भगवती ! अनन्या-
-सक्तमपराधीनवृत्ति बाह्यविषयव्यापारैरसंस्पृष्टं जनसंनिधावप्य-

विभाव्यमानं संकल्पमयं वल्लभमुपनीयाजस्रमन्तिके संस्थाप्य विरहिणीरबला विनोदयति'— इति सूचयन्, वलाहकमनिच्छन्तमपि रसेनावर्ज्य उज्जयिनीपरिसरं प्रापयन्तीं श्रीविशालाया विशालाया अन्तःपुरपरिचारिकामिव सविधे संसर्पन्तीं सलिलोत्पीडाभिवृद्धस्वरूपां निर्विन्ध्यां स्मारयति ॥

**आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा**
**शापस्यान्ते विगलितशुचा तां मयोद्वेष्टनीयाम् ।**
**स्पर्शक्लिष्टामयमितनखेनासकृत्सारयन्तीं**
**गण्डाभोगात्कठिनविषमामेकवेणीं करेण ॥ २४ ॥**

एवमसह्यविरहानलज्वालाजालकबलितावयवामात्मनो निमित्ते यातनासहस्रमनुभवन्तीं क्षामक्षामामेकवेणीधरां प्रणयिनीं हृदये लीनामिव, प्रतिबिम्बितामिव, लिखितामिव, उत्कीर्णरूपामिव साक्षात्कुर्वन् यक्षः 'यो बृन्दानि त्वरयति पथि श्राम्यतामध्वगानां मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि' इति वक्ष्यमाणमाशयमिहानुसंदधानः 'नचिरादेव शापस्यावसानं भविता; त्वदीयवेणिमोक्षोत्सुकोऽयं जनः तव परिसरमागतप्राय एव, दयिते मा शुचः' इत्यादिसंदेशस्त्वया प्रेयस्याः संनिधिं प्रापणीयः इति सूचयन्, तवासंनिधानाद्विरहावस्था-

मनुभवन्त्याः पूर्वं वेणीभूतप्रतनुसलिलायाः सिन्धोः कार्श्यापनयने यद्यत्कर्तव्यं तदकथितमेव भवतैवानुष्ठेयमासीत्किल, तद्वदस्या विषयेऽपि 'कार्श्यं येन त्यजति विधिना असौ मयैवोपपाद्यः' इति ध्वनयतीव ॥

पादानिन्दोरमृतशिशिरान् जालमार्गप्रविष्टा-
न्पूर्वप्रीत्या गतमभिमुखं संनिवृत्तं तथैव ।
खेदाच्चक्षुः सलिलगुरुभिः पक्ष्मभिश्छादयित्वा
साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम् ॥

पूर्वं मया प्रोत्साह्य प्रस्थापितं वक्रमार्गेणोपसर्पन्तमदृष्टचरं त्वां दिवः खण्डमिव विराजमाना श्रीविशाला विशाला नागरिकवृत्त्या समानन्दयत्किल; इयं तु स्वयमेव जालमार्गेण पूर्वप्रीत्या प्रविष्टान् चिरपरिचितानपि निरुपाधिकप्रेम्णा सुचिरसङ्गग्लानिमपाकृत्य सुखमापादितवतोऽपि इन्दोः पादान् एकाकिनं रमणरहितमात्मानं स्पृशतः निर्दयमवधीर्य 'नायमद्यावसरः, यथागतं प्रतिनिवृत्त्य गम्यताम्' इत्युपदिशन्ती तद्दर्शनेनैव प्रियतमभुजोच्छ्वासितालिङ्गितस्यात्मनः पूर्वस्थितिमनुस्मारिता, तेजोमयं चक्षुरश्रुभिः, औचित्यविचारसाधनं चैतन्यं दुःखेन, निद्रासमयसंकल्पसमागमसौभाग्याधिगमप्रवणां

मनोवृत्तिं प्रबोधनेन, धार्ष्ट्यं च मोहेनान्तरयन्ती 'रमणविरहे सतीमणिभिरेवं वर्तितव्यम्' इति प्रदर्शयतीत्याशयमिह मधुर-मुपक्षिपति यक्षः ॥

सा संन्यस्ताभरणमबला पेलवं धारयन्ती
शय्योत्सङ्गे निहितमसकृदुःखदुःखेन गात्रम् ।
त्वामप्यास्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ २६ ॥

कुसुमसुकुमारे नवे वयसि वर्तमाना असेवदार्हेयं रमणी मद्वियोगदुःखदुःखिता कृशिमानमापन्ना शरीरधारणमेव भारं मन्यते, का कथा तर्हि तस्या भूषणपरिग्रहे? विरहशयनादुत्था-नमेव दुष्करमाकलयति, का कथा तर्हि विहाराहारानुसेवने? अविरलबाष्पदुर्दिनान्धकारिताननां चक्षुषोरुन्मीलनमपि अशक्यं भावयति, तर्हि कथमतिथिसत्कारस्यावकाशः? तादृशीं तस्याः स्थितिमवलोक्य प्रथमदर्शने सत्कारादिकमप्रतीक्ष्यैव त्वं दुः-खेन स्वयमेव नवजलमयमश्रु पातयिष्यसीति वदन्, खण्डि-तायाः प्रणयिन्या दशामुद्वीक्ष्य नायको दाक्षिण्यादनुतपन् प्रार्थनाचाटुकारैस्तां प्रीणयति, अस्यास्तु दशामनुपश्यन्तः सर्वे-ऽपि आर्द्रान्तरात्मनो भविष्यन्तीत्यवगमयन् यक्षः, 'प्रायः' इत्यनेन साध्व्याः मुग्धाङ्गनाया एतस्या ईदृशीमवस्थामाकल-

वन्तः सर्वोऽप्यस्मिन् लोके सचेतनाः करुणावृत्तय एव भवेयुः, विलक्षणस्वभावः वित्तमदमत्तचित्तः अरसिकशिरोमणिर्धनपतिरेक एव कठिनहृदयः, अनुजीविनां विलासिजनानां स्वयमेव दुःखमुत्पाद्य हृष्यतीति सूचयन् स्वयं रोदित्यस्मानप्यास्नं मोचयति। 'प्रायेण आर्द्रान्तरात्मा सर्वोऽपि करुणावृत्तिर्भवति—' इति व्याकुर्वन्तः व्याख्यातारः आर्द्रान्तरात्मानोऽपि केचन कारुण्यं नावलम्बन्ते इत्यभिप्रयन्तः स्ववाग्विरोधमपि नाकलयन्तीव ॥

जाने सख्यास्तव मयि मनः संभृतस्नेहमस्मा-
दित्थंभूतां प्रथमविरहे तामहं तर्कयामि।
वाचालं मां न खलु सुभगंमन्यभावः करोति
प्रत्यक्षं ते निखिलमचिराद्भ्रातरुक्तं मया यत् ॥२७॥

यद्यप्यत्रोज्जयिन्यामिव जालोद्गीर्णैः केशसंस्कारधूपैः भवनशिखिनां नृत्योपहारादिभिश्च अभ्यागताय भवते सपर्या न क्रियते, अथापि शून्यहृदया मामेवानवरतं ध्यायन्ती इयं ते सखी उत्पन्नसौहृदेनोपचारपराङ्मुखेन मम भ्रातृस्थानमापन्नेन त्वया अवश्यं मर्षणीयैव। एतदर्थमेव मया तस्याः शोचनीया दशा असकृदनुवर्ण्यते न तु सौभाग्यगर्वेण इति बोधयन्यक्षः अनितरसाधारणेन पातिव्रत्येन पवित्रतमं हृदयमा-

वहन्त्यानयानादृतशरीरसंस्कारया सारङ्गाक्ष्याधिष्ठितं मे भवनं त्रिभुवनगुरोश्चण्डेश्वरस्य धाम्नोऽपि पुण्यतरमाभाति सहृदयानामित्युपदिशतीव ॥

**रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं**
**प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ।**
**त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्या**
**मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति ॥ २८ ॥**

अस्मिन्समये मदीयगृहाङ्गणं प्राप्यापि निशीथावधि क्रीडाशैल एव विश्रम्य मन्द्रगर्जितैरवनिशयनासन्नवातायनस्य सविधं मन्दमन्दमुपसरति त्वयि, संन्यस्ताभरणा चिरविस्मृतविलासविभ्रमा मे गेहिनी कदाचिदतर्कितोपनतं नयनस्फुरणं सुनिमित्तमनुपश्यन्ती हृष्टा भवेत्— इति यक्षमुखेनानुवर्णयन् महाकविः ‘महाकालस्यानुसेवने स्वार्थ एवानुष्ठितः ; इह हि परार्थः । तत्र वेश्यानां पण्यं शरीरमावहन्तीनां कटाक्षपातः समजनि ; अत्र तु साध्व्याः पातिव्रत्यपताकामावहन्त्याः अन्तस्तोष आकस्मिकनयनस्फुरणमहोत्सवेन’ इति सूचयन्— समुज्ज्वलवेषधारिणी दर्शनीयविलासविभ्रमा वारवनिता ; मलिनवसना दुर्लक्ष्येयमाधिक्षामा यक्षवनिता । अलसवलितैरपाङ्गप्रसरैरखिलानावर्जयति वाराङ्गना ; असंस्कृतैरलकैराक्रान्त-

कपोला नितान्तमुद्वेजयति प्रेक्षकानियममराङ्गना । अञ्जनस्नेह-रमणीयेन लोचनयुगलेनानङ्गवेदनामुपजनयत्यात्मानुशासनपराणामपि पण्यललना; निरञ्जनस्नेहेन नयनयुगलेनानक्षरमात्मनो दशामतिकृपणामवगमयन्ती विषयसुखेभ्यो वैमुख्यमापादयतीन्द्रियार्थानुसेवनप्रवणानामपीयं यक्षललना । कल्पवृक्षप्रसूतिं रतिफलं मध्वसकृदासेव्य विलासविभ्रमादिकमात्मनः समुदञ्चयति वेशकामिनी; परित्यक्तमदिरारसास्वादादिसुखा अनवरतरोदनाताम्रानिर्दयमुखी समुदञ्चयति करुणामार्द्रान्तरात्मनामेषा त्रिदशकामिनी' इत्याद्यात्मनो हृदयगह्वरगोपितमाशयमाविष्करोति सुसूक्ष्मया व्यङ्ग्यसरण्या ॥

वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयै-
मुक्ताजालं चिरविरचितं त्याजितो दैवगत्या ।
संभोगान्ते मम समुचितो हस्तसंवाहनानां
यास्यत्यूरुः सरसकदलीस्तम्भगौरश्चलत्वम् ॥

सुनिमित्तवर्णनपरमिदं पद्यद्वयमनुविमृशतामस्माकं रघुनाथस्य संदेशहरमाञ्जनेयमन्तिकस्थमजानानामपि 'शुभानि निमित्तानि शुभानि भेजिरे' इत्युपक्रम्य तस्या वामनयनोरुपरिस्पन्दनमतिमधुरमुपवर्ण्य महाकविभिराश्रयणीयां सरणिमुपदिशन् कविकोकिलो वाल्मीकिः पुरतस्तिष्ठति ॥

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीने त्वयि नृत्तमारब्धवतः प्रदोषनटस्य यावानन्तस्तोषः समजनि, तथैवेहावनिशयनासन्न-वातायनं समया नीचैरभिलीने त्वयि वामोरुपरिस्पन्दनरूपं शुभं निमित्तमनुपश्यन्ती मे प्रेयसी अमन्दमानन्दमनुभवेत्। तदानीं तया अदृष्टोऽपि शान्तोद्वेगेन मदीयेनान्तरात्मना सादरं स-कौतुकं सप्रश्रयं सविस्रम्भं च साक्षात्कृतो भविष्यसीति मेघं प्रोत्साहयति यक्षः ॥

तस्मिन्काले जलद यदि सा लब्धनिद्रासुखा स्या-
दन्वास्यैनां स्तनितविमुखो याममात्रं सहस्व ।
मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथंचि-
त्सद्यः कण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥

एवं सुनिमित्तदर्शनेन किञ्चिदिवाश्वस्ता चिरप्रार्थितसांनि-ध्यां भगवतीं निद्रामुपलभ्य संकल्पमयं रमणसमागमसुखमनु-भवन्ती रसिकेन भवता न प्रतिबोधनीयेति स्मारयन्यक्षः पूर्व-मुज्जयिन्यां नक्तं सूचिभेद्यैस्तमोभिः सर्वतो रुद्धालोके राज-मार्गे रमणवसतिं गच्छन्तीनां प्रगल्भवनितानां विषयेऽपि करु-णामालम्ब्य स्तनितविमुखो भूत्वा तोयोत्सर्गाद्विरम्य सौदामनीं तासां मार्गप्रदर्शनाय नियुज्य आत्मनो रासिक्यमाविश्चकार किल भवान्। तादृशस्य भवतः संवत्सरपरिमितायां रजन्या-

मनालोकोच्छेदे तामिस्रे मज्जन्ती कृच्छ्रात्स्वप्नलब्धं साक्षाद्रमणसमागमसुखमनुभवन्ती मुग्धेयममराङ्गना पेशलाङ्गी नितरां दयनीयेति किमु वक्तव्यम्' इति सूचयतीव ॥

तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ।
विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे
वक्तुं धीर स्तनितवचनैर्मानिनीं प्रक्रमेथाः ॥

'अविज्ञातविरहसंतापासूज्जयिनीपुरन्ध्रीषु सह रमणैः सुखं प्रसुप्तासु' त्वमपि प्रणयिन्या विहृत्य खिन्नविद्युत्कलत्रः आत्मानं विनोदितवानितीदं समुचितमेव; इह त्वस्याः शोचनीयां दशां दृष्ट्वा स्वसुखनिरभिलाष आर्द्रान्तरात्मा त्वं नवजलमयमास्रं मुञ्चन् महिलाजनस्य प्रथमदर्शने समुपनेतुमर्हाणि मङ्गल्यद्योतकानि मालतीजालकान्यावहतानुचरेणानिलेन तामुत्थाप्याश्वास्य च स्वयं गवाक्षे तिष्ठन् प्रणयिनीं विद्युतमन्तः प्रवेश्य तन्मुखेन तस्या लोचनयुगलमात्माभिमुखमापादयन् संदेशाक्षराणि वक्तुमर्हसि' इति प्रार्थयन्यक्षः विद्युद्गर्भस्य मेघस्य उज्जयिन्यामलकायां च रात्रिजागरणे समानेऽपि एकत्रात्मनो विनोदेन स्वार्थः अपरत्र दुःखिताया वनिताया आश्वासनेन

परार्थश्चानुष्ठितो भवतीति सूचयन् 'मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः' इति पूर्वोक्तमभ्युपेतार्थकृत्यं 'वक्तुं धीर स्तनितवचनैर्मानिनीं प्रक्रमेथाः' इतीह विशदयतीति मन्यामहे ॥

भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं
तत्संदेशान्मनसि निहितादागतं त्वत्समीपम् ।
यो बृन्दानि त्वरयति पथि श्राम्यतामध्वगानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥

'भर्तुरन्यासङ्गकलुषिताशयानां नायिकानां नयनसलिलं प्रणयिभिः स्वयमागतैरेव प्रार्थनाचाटुकारादिभिः प्रशमं नेयम् । न हि तादृशयोर्मध्यगेनान्येन भवितव्यम् । इह तु सर्वात्मनानुरक्तस्य मनसाप्यन्यां योषितमनाकलितवतो नायकस्य सकाशाद्दूतमुखेन संदेशश्रवणेनैव यक्षदयिताया आनन्दातिशयो भविता' इति द्योतयन्महाकविः स्वयमेव स्निग्धैः स्तनितवचनैः पथिकबृन्दान्यबलासकाशं प्रेषयितुं त्वरमाणः प्रकृत्या परहितैकप्रवणः संतप्तानां शरणमसौ वलाहकः वैरिणा विधिना रुद्धमार्गाणां प्रणयिनीसकाशमुपगन्तुमशक्नुवतां संदेशहरो भवितुमत्यन्तमर्हतीत्यात्मनो हृदयनिहितमाशयमभि-

व्यञ्जयन् 'अहं रामस्य संदेशाद्देवि दूतस्तवागतः' इत्युद्गृण-न्तं कविकोकिलमतिमधुरमनुद्गायतीति जानन्तो वयं महति रसार्णवे निमग्ना भवामः ॥

इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य संभाव्य चैव ।
श्रोष्यत्यस्मात्परमवहिता सौम्य सीमन्तिनीनां
कान्तोपान्तात्सुहृदुपगमः संगमात्किंचिदूनः ॥

संतापसंततिमहाव्यसनार्णवे मग्नेयं मे प्रेयसी 'भर्तुर्मित्रम्' इत्यादिवचनामृतपानेन वचसामविषयं प्रमोदमुपलभ्य जानकीव पवनतनये त्वयि महतीं संभावनां कृतज्ञतां चावहेत् । यथा गम्भीरायाः पयसि प्रकृतिसुभगस्ते छायात्मा प्रवेशमलभत, तथैवात्युदारप्रकृतेरस्या निर्मले हृदये श्रवणसुभगा ते वाणी प्रवेशं लभेतैव । मदीयं श्रोत्रपेयं संदेशं कर्णामृतमभिवर्षति त्वयि अपर्याप्ततदास्वादसुखा गवाक्षे लम्बमानं त्वां विहातुमसमर्था अत्यन्तमवहिता भूत्वा 'त्वत्संपर्केण गवाक्षस्य रम्यतां त्वदीयस्तनितसंबन्धेनाक्षराणां धन्यतां त्वद्दर्शनेनात्मनः पवित्रतां त्वत्प्रसादेन काननोदुम्बराणामिव प्रत्याशाबीजाङ्कुरस्य सफलतां च मुहुर्मुहुर्गणयेत्' इति व्यञ्जयन् 'सौम्य' इत्यनेन

मेघे निरतिशयमात्मनो बहुमानमाविष्करोति यक्षः ॥

'गृहीत्वा प्रेक्षमाणा सा भर्तुः कराविभूषणम । भर्तारमिव संप्राप्ता जानकी मुदिताऽभवत् ॥' इति प्राचेतसेनोक्तमाशय-मनुस्मारयन्निव महाकविः 'कान्तोपान्तात्सुहृदुपगमः संगमा-त्किञ्चिदूनः' इत्युद्गिरति ॥

तामायुष्मन्मम च वचनादात्मनश्चोपकर्तुं
ब्रूया एवं तव सहचरो रामगिर्याश्रमस्थः ।
अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तां
पूर्वाशास्यं सुलभविपदां प्राणिनामेतदेव ॥ ३४ ॥

प्राणपरित्यागोन्मुखीं जानकीं 'वैदेहि कुशली रामस्त्वां च कौशलमब्रवीत्' इत्याभाषितवतो रामदूतस्य संदेशाक्षराणि मनसि निधाय, इहापि 'अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्ताम्' इति निर्दिशन् 'पूर्वाशास्यं सुलभविपदां प्राणिनामेतदेव' इति महर्षिणा प्रदर्शिता पद्धतिरियमेकैव रमणीया कविभिरन्यैरप्याश्रयणीया वर्तते, किं कुर्मः' इति बोधयन् व्योमगङ्गाजलार्द्रैः पुष्पैः स्कन्दस्य स्नपनादपि दुःखा-र्तानां जीवितनिरपेक्षाणां प्राणिनां वागमृतवृष्टिभिः प्रत्युज्जीवनं पुण्यतरमत्यन्तमाशास्यमिति सूचयन्, मेघस्य स्तनितवचनश्र-

वणेन पावकेर्मयूर इवेयमपि अमन्दमानन्दमुपलभमाना यक्षवनिता गलितमप्युत्तरीयमजानती आत्मानमपि विस्मृत्य तत्सनाथस्य गवाक्षस्य निकटमुपसरेदित्यपि ध्वनयति ॥

अङ्गेनाङ्गं तनु च तनुना गाढतप्तेन तप्तं
सास्रेणास्रद्रुतमविरतोत्कण्ठमुत्कण्ठितेन ।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
संकल्पैस्ते विशति विधिना वैरिणा रुद्धमार्गः ॥

देवगिरेः प्रस्थाय चर्मण्वतीमतितीर्य गच्छतो मेघस्य वीणिभिः रासिक्यस्य परां काष्ठामधिरूढैः सिद्धद्वन्द्वैर्मार्गो दत्तः । ततोऽपि द्रुततरं रामगिरेः प्रस्थायालकां गन्तुमीहमानस्य मे रसिकतरोऽसौ वैरी धनपतिरूपेणागतो विधिः मार्गं साभिनिवेशं रुणद्धि । अथाप्येष शरीरस्यैवेष्टे न तु मानसीनां वृत्तीनाम् । सोऽयं संकल्पो नाम बाह्यव्यापारैरसंस्पृष्टः साक्षाच्छरीरदर्शनालिङ्गनादिसुखेभ्योऽप्यधिकमाह्लादमुपजनयति मे त्वदीयान्यङ्गानि चेष्टितान्यालापांश्च हृदयेनानवरतमालिखतः' इत्यतिकरुणमात्मनो दशामवगमयति यक्षः ॥

शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्ता-
त्कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात्

सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृष्ट-
स्त्वामुत्कण्ठाविरचितपदं मन्मुखेनेदमाह ॥ ३६ ॥

दैवादुपनतं यक्षस्य भाग्यविपर्ययं सरसमभिवर्णयन्निह महाकविः 'योऽसौ शार्ङ्गिणो वर्णचोरो बलाहकः पूर्वं अगाधाया अर्मण्वत्या हृदयमालोड्य रसमादाय सुदूरमन्तरमतिक्रम्य ब्रह्मावर्तमवगाह्य संतप्तं तं जनपदं धारापातैः समजीवयत्, सोऽयं प्रत्यासन्ने नभसि गम्भीरप्रकृतिकमपि यक्षं उत्कण्ठाया अतिभूमिमारोप्य, अस्वतन्त्रात्तदीयहृदयान्निष्क्रान्तानि संदेशरूपाणि वचनामृतान्यादाय श्रवणविषयमतिक्रान्तं वल्लभमनुचिन्त्य दूयमानां यक्षवनितां संजीवयति' इति व्यञ्जयन्नाह्लादयति सहृदयान् ॥

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासा-
न्हन्तैकस्थं क्वचिदपि न ते चण्डि सादृश्यमस्ति ॥

यथा 'दशपुरवनिताः बलाहकस्य बिम्बं प्रीतिविस्फारितैर्नयनैरापिबन्त्यो हृदयेऽकुर्वन्, तथैव पेशलाङ्ग्याः प्रेयस्या बिम्बमान्तरेण चक्षुषानवरतमनुध्यायन्यक्षः तस्याः सादृ-

श्यमावहतां वस्तूनां निरीक्षणेनात्मानं विनोदयितुमभिलषन्न कुत्राप्येकस्मिन्वस्तुनि समग्रं सादृश्यमुपलभते' इति वर्णयन्महाकविः 'पद्मकोशपलाशानि दृष्ट्वा दृष्टिर्हि मन्यते। सीताया नेत्रकोशाभ्यां सदृशानीति लक्ष्मण। पद्मकेसरसंसृष्टो वृक्षान्तरविनिःसृतः। निश्वास इव सीताया वाति वायुर्मनोहरः॥' इत्याद्युद्गिरन्तमादिकविं स्मारयति॥

इममेवाशयम् 'नवेषु लोध्रप्रसवेषु कान्तिर्दृशः कुरङ्गेषु गतं गजेषु। लतासु नम्रत्वमिति प्रमथ्य व्यक्तं विभक्ता विपिने प्रिया मे॥' इति माधवमुखेनातिकरुणमुपवर्णयति भवभूतिः॥

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालिप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः॥

योऽसौ कृतान्तः बालारुणपादस्पर्शसुखाभिलाषीणि कमलान्यसहमानः मेघस्य धारापातैस्तेषामसह्यामार्तिमजनयत् सोऽयं प्रणयिन्यास्तव छायामालिख्य त्वच्चरणतलस्पर्शेनात्मानं विनोदयितुमभिलषतो मे नयनयोरास्रधारामुत्पाद्य प्रत्यूहपरम्परामत-

र्कितमातन्वानः क्रौर्यमन्यादृशमाविष्करोति ; किं करोमि मन्द-भागधेयः ! इति सशोकमास्तं मुञ्चन्यक्षः 'हतविधेः क्रौर्यस्य कारणीभूतैरावयोर्जन्मान्तरपातकैरेव भवितव्यम् ; तदहं लाङ्गलीव विषयविमुखः सारस्वतीनामपामनुसेवनेन प्रायश्चित्तं विधाय अन्तःशुद्धो भूत्वा तव परिसरमागन्तास्मि ; त्वमपि शंभोः केशग्रहणचतुरायाः भवान्या अपि स्पृहणीयसौभाग्यायाः जाह्नव्यास्तीरमनुदिवसं गत्वा तस्याः पुण्यजलेष्ववगाह्य विधूतपाप्मानमात्मानं कर्तुमर्हसि' इति व्यञ्जयतीत्यहो ! सुश्लिष्टता पूर्वोत्तरमेघयोः ॥

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
लब्धायास्ते कथमपि मया स्वप्नसंदर्शनेषु ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥

'अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः । सीतेति मधुरां वाणीं व्याहरन् प्रतिबुध्यते ॥ दृष्ट्वा फलं वा पुष्पं वा यद्वान्यत्सुमनोहरम् । बहुशो हा ! प्रियेत्येवं श्वसंस्त्वामभिभाषते ॥' इत्येवं रामभद्रस्य शोचनीयां दशामुपपादितवतः प्राचेतसादधिगतसंस्कार इव महाकविरिहात्यन्तं करुणार्थप्रथिताभिः सूक्तिभिर्यक्षस्य दयनीयां स्थितिं वर्णयन् तस्यैव

नयनगोचरामन्येषामदृश्यरूपां वनितामिमां सृजन् पूर्वं जाह्नव्या अस्थानोपगतयमुनासङ्गमेऽनक्षरमावेदितागमनां मेघस्य हृदये निहितामदृश्यरूपामन्तर्वाहिनीं सरस्वतीं स्मारयतीत्यहो! मानसी वृत्तिर्महाकवेः ॥

पद्यमिदमनुध्यायतामस्माकम् ‘इमां तटाशोकलतां च तन्वीं स्तनाभिरामस्तबकाभिनम्राम् । त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः सौमित्रिणा साश्रुरहं निषिद्धः ॥’ इत्यस्यैव कवेः रमणीया सूक्तिः स्मरणपदवीमास्कन्दति ॥

भित्त्वा सद्यः किसलयपुटं देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः
पूर्वस्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ ४० ॥

शिलास्वासीनानां मृगाणां नाभिगन्धैः परिमलास्तुषाराद्रिवाताः सत्यं सह विद्युता सञ्चरतो मेघस्य सुखावहा एव; त्वद्वियोगदुःखकर्शितं मन्दभाग्यं मां पुनरिमे हुताशनकल्पा दहेयुः। अथाप्यन्योदयासहिष्णुभिर्दवाग्निभिरिव प्रकृष्टवंशजानां निष्कारणवैरिभिः मुक्ताध्वभिः शरभैरिवापथे संचरद्भिर्धूर्तैराक्रान्ते प्रदेशे पातिव्रत्यस्य परां काष्ठामारूढायाः ‘एवं खलु

र्कितमातन्वानः क्रौर्यमन्यादृशमाविष्करोति; किं करोमि मन्दभागधेयः? इति सशोकमास्रं मुञ्चन्यक्षः 'हतविधेः क्रौर्यस्य कारणीभूतैरावयोर्जन्मान्तरपातकैरेव भवितव्यम्; तदहं लाङ्गलीव विषयविमुखः सारस्वतीनामपामनुसेवनेन प्रायश्चित्तं विधाय अन्तःशुद्धो भूत्वा तव परिसरमागन्तास्मि; त्वमपि शंभोः केशग्रहणचतुरायाः भवान्या अपि स्पृहणीयसौभाग्यायाः जाह्नव्यास्तीरमनुदिवसं गत्वा तस्याः पुण्यजलेष्ववगाह्य विधूतपाप्मानमात्मानं कर्तुमर्हसि' इति व्यञ्जयतीत्यहो! सुश्लिष्टता पूर्वोत्तरमेघयोः ॥

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
 र्लब्धायास्ते कथमपि मया स्वप्नसंदर्शनेषु ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
 मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥

'अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः । सीतेति मधुरां वाणीं व्याहरन् प्रतिबुध्यते ॥ दृष्ट्वा फलं वा पुष्पं वा यद्वान्यत्सुमनोहरम् । बहुशो हा! प्रियेत्येवं श्वसंस्त्वामभिभाषते ॥' इत्येवं रामभद्रस्य शोचनीयां दशामुपपादितवतः प्राचेतसादधिगतसंस्कार इव महाकविरिहात्यन्तं करुणार्थग्रथिताभिः सूक्तिभिर्यक्षस्य दयनीयां स्थितिं वर्णयन् तस्यैव

नयनगोचरामन्येषामदृश्यरूपां वनितामिमां सृजन् पूर्वं जाह्नव्या अस्थानोपगतयमुनासङ्गमेऽनश्वरमावेदितागमनां मेघस्य हृदये निहितामदृश्यरूपामन्तर्वाहिनीं सरस्वतीं स्मारयतीत्यहो! मानसी वृत्तिर्महाकवेः ॥

पद्यमिदमनुध्यायतामस्माकम् ‘ इमां तटाशोकलतां च तन्वीं स्तनाभिरामस्तबकाभिनम्राम् । त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः सौमित्रिणा साश्रुरहं निषिद्धः ॥’ इत्यस्यैव कवेः रमणीया सूक्तिः स्मरणपदवीमास्कन्दति ॥

भित्त्वा सद्यः किसलयपुटं देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः
पूर्वस्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ ४० ॥

शिलास्वासीनानां मृगाणां नाभिगन्धैः परिमलास्तुषाराद्रिवाताः सत्यं सह विद्युता सञ्चरतो मेघस्य सुखावहा एव; त्वद्वियोगदुःखकर्शितं मन्दभाग्यं मां पुनरिमे हुताशनकल्पा दहेयुः। अथाप्यन्योदयासहिष्णुभिर्दवाग्निभिरिव प्रकृष्टवंशजानां निष्कारणवैरिभिः मुक्ताध्वभिः शरभैरिवापथे संचरद्भिर्धूर्तैराक्रान्ते प्रदेशे पातिव्रत्यस्य परां काष्ठामारूढायाः ‘एवं खलु

सतीमणिभिर्वर्तितव्यम्' इत्युपदिशन्त्याः गुणवत्यास्ते शरीरं स्पृष्ट्वा मामपि इमे स्पृशन्ति इति भावयता मया त एव वाताश्चन्दनशीतलाः सुखमालिङ्ग्यन्ते— इति संदिशन्यक्षः सहृदयानां समाजमावर्जयति ॥

इममेवाशयमन्यत्रापि 'शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् । अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥' इति वर्णयति महाकविः ॥

संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढोष्णाभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥

तुषाराद्रावर्धेन्दुमौलेश्चरणन्यासो दृषदि मया भक्तिनम्रेणासकृदुपासितः किल; तादृशस्य पुण्यकर्मणः फलत्वेन देहपातानन्तरं स्थिरगणपदप्राप्तिः तत्पदाधिगमेनेतरदुरवापं दिव्यगीतश्रवणानन्दादिकं च न मयाभिलष्यते । परं त्वद्य युगसहस्रायमाणायास्त्रियामायाः संक्षेपः दिवसस्य मन्दमन्दातपत्वं च साभिनिवेशं प्रार्थ्यते । हन्त! विधिविपाकेन भगवानपर्णाजानिरपि मयि विमुखः कारुण्यं नावलम्बते ।

किं करोमि? कं वा शरणं व्रजामि? अतिगुर्वीं वियोगव्यथामपाकर्तुमपर उपायो न लभ्यते--- इति संदिशन् दीर्घमुष्णं च निश्वसिति यक्षः ॥

न त्वात्मानं बहु विगणयन्नात्मना नावलम्बे
तत्कल्याणि त्वमपि सुतरां मा गमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छन्त्युपरि च दशाश्चक्रनेमिक्रमेण ॥४२॥

अथवा 'जन्मान्तरकृतं हि कर्म फलमुपनयति पुरुषस्येह जन्मनि'। अलमीश्वरोपालम्भेन। पश्य, अखिलसुरासुराभिनन्दितमहिमातिशयः अतुलभुजबलार्जिताशेषलोकाधिपत्यः अपरिमेयाच्युतभक्तिपरवशान्तरङ्गो बलिरपि पुरा तेनैव विष्णुना पराभूतो विमथितश्च पातालमगात्। प्रबलभक्त्याराधितत्र्यम्बकः निस्तुलप्रतापापहसितामरपतिवैभवः बन्दीकृतत्रिदशवनितागीयमानयशाः त्रिभुवनभटो दशमुखोऽपि विधिवशात्प्रच्यावितसत्वः समरे दाशरथिशरशरव्यतामुपयातः कथाशेषोऽभवत्। तत्कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा? इत्याद्यवगमयन्यक्षः 'कल्याण्याः प्रेयस्याः पातिव्रत्यमेवात्मनो जीवितावलम्बनहेतुः' इति सूचयन् सदाचारां तामुत्तमां वरवर्णिनीं निपुणमाश्वासयति ॥

पद्यानि चेमानि परिशीलयतामस्माकम् ‘उद्दामदेहपरिदाह-महाज्वराणि संकल्पसंगमविनोदितवेदनानि। त्वत्स्नेहसंविदवलम्बितजीवितानि किं वा मयापि न दिनान्यतिवाहितानि ॥’ इति श्रीमद्भवभूतिरसनायाः संभूता मधुरमधुरा सरस्वती हृदयगह्वरमापूरयति ॥

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानन्यान् गमय चतुरो लोचने मीलयित्वा।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥४३॥

आषाढ्यां शेषपर्यङ्के संविश्य योगनिद्रया लोचने मीलयन्निमांश्चतुरो मासान् गमयति किल शार्ङ्गपाणिः, तद्वत् त्वमपि गृहाभ्यन्तर एव विरहशयने संनिषण्णैकपार्श्वा असकृन्नयनसलिलोत्पीडरुद्धावकाशां निद्रामाकाङ्क्षन्ती केवलं लोचने मीलयित्वा सदनोपकण्ठारामेषु कनककदलीवेष्टनप्रेक्षणीयानां क्रीडाशैलादीनां जालमार्गेणापि दर्शनं परिहरन्ती कथं कथमपि प्राणान् धारयन्ती दिवसानतिवाहय— इति संदिशन्, परिणतशरच्चन्द्रिकासु क्षपासु सह प्रियतमेन भाविनः सुखानुभवस्यानवरतानुसंधानमेव विरहातुराणामात्मसंस्थापनहेतुरित्युपदिशन्, कदाचिदुत्कण्ठाविनोदनाय बहिरागत्य कैलासाद्रेरुप-

तटेषु विचरन्त्याः प्रेयस्याः स्निग्धभिन्नाञ्जनाभया श्यामया तनुलतया सनाथस्य त्रिदशवनितादर्पणस्याद्रेः स्तिमितनयनप्रेक्षणीयां शोभामुत्पश्यन्तो यदृच्छयाम्बरतले चरन्तः शुनासीरादयो देवास्तामपहृत्यात्मनः प्रत्याशां मूलोच्छेदं नाशयेयुरिति रणरणकेनाक्रान्तहृदयोऽसौ यक्षः सर्वथा मदागमनपर्यन्तं बहिर्न गन्तव्यमित्यादिशन्, पश्चान्मया दत्तहस्ता गौरीव शम्भुना क्रीडाशैलादिषु विचरिष्यसीति प्रोत्साहयतीत्यहो! संकल्पधोरणी कामिनामबलाविप्रयुक्तानाम् ॥

भूयश्चाह त्वमसि शयने कण्ठलग्ना पुरा मे
निद्रां गत्वा किमपि रुदती सस्वरं विप्रबुद्धा ।
सान्तर्हासं कथितमसकृत्पृच्छते च त्वया मे
दृष्टः स्वप्ने कितव रमयन्कामपि त्वं मयेति ॥

शम्भोः केशग्रहणचतुरां जाह्नवीमुद्वीक्ष्येर्ष्याकषायितनयनायाः क्रोधेनाबद्धभ्रुकुटिरचनायाः गौर्याः सौमनस्यसंपादनाय प्रक्रान्तवन्तं भुजगवलयं हित्वा क्रीडाशैले विचरन्तीं प्रेयसीं हस्तदानेन प्रीणयन्तं शम्भुं स्मृतिपथमारोपयन्महाकविः, 'पर्यायेण प्रसुप्तश्च ममाङ्के भरताग्रजः' इत्यारभ्य काकासुरवृत्तान्तमभिज्ञानत्वेन मैथिल्योपवर्णितमनुसंधाय स्वयमिह दम्पत्येकसमधिगम्यं गूढवृत्तमिदमभिज्ञानमनुवर्णयतीत्याकलयामः ॥

एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा
मा कौलीनादसितनयने मय्यविश्वासिनी भूः ।
स्नेहानाहुः किमपि विरहे ह्रासिनस्ते ह्यभोगा
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥४५॥

सुरयुवतिभिरनुक्षणमुपलालितोऽपि अतिगम्भीरहृदयो मेघः दुर्दशामापन्ने यदृच्छया दृष्टे मयि निरुपाधिकमाबद्धेन आनृशंस्यादनुक्षणं राशीभवता स्नेहेनाविष्टहृदयः दूरीकृत्य देवकामिनीदाक्षिण्यमनितरसुलभान् स्वयमुपनतान् भोगान् परित्यज्य क्रीडालोलाः सुरयुवतीर्भाययित्वा अलकाभिमुखमगमत्किल; तत्कथमिव भवत्याः गुणगणस्मरणेन चिरमनुभूतस्नेहरसानुचिन्तनेन सदृशवस्तुनिरीक्षणेन संकल्पसमागमोद्यमपरिपूरितान्तरङ्गेण पुनःसमागमप्रत्याशावर्जिन चात्मानमवलम्बमानोऽयं जनः अन्यां योषितं मनसाप्यनुचिन्तयितुमीष्टे? इति हृदयेनाकलयन्, 'कच्चिन्न विगतस्नेहः प्रवासान्मयि राघवः । कच्चिन्मां व्यसनादस्मान्मोचयिष्यति वानर ॥ मन्निमित्तेन मानार्हः कच्चिच्छोकेन राघवः । कच्चिन्नान्यमना रामः कच्चिन्मां तारयिष्यति ॥' इत्याद्यतिकरुणं व्याहरन्तीं मैथिलीमनुस्मारयन् यक्षः, 'प्रवासाश्रयात् स्नेहो न कदाप्यपचीयेत, परं त्वनुक्षणमुपचितरसः परिवर्धते' इति गतानुगतिकं लोकमुप-

देष्टुमर्हसीति प्रेयसीं प्रतिबोधयन्नात्मनः संदेशमतिमधुरमवसाययति ॥

कच्चित्सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्न खलु भवतो धीरतां कल्पयामि ।
निःशब्दो हि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं तु प्रणयिषु सतामीप्सितार्थक्रियैव ॥

एवं दुःखार्तस्यानन्यगतिकस्य रामगिर्याश्रमे यदृच्छया दृष्टस्य यक्षस्य निमित्ते केवलमानृशंस्येन स्वसुखनिरभिलाष उत्तरामाशामङ्गीकृत्य, सुदूरमध्वानं विलङ्घ्य, मध्येमार्गं प्रकृष्टवंशजानामार्तिजनकं दवाग्निमसाधुसेवितेन पथा संचरमाणं शरभं चोन्मथ्य क्रौञ्चरन्ध्रमतीत्य, कैलासाधिदेवताया गौर्याः प्रसादमुपलभ्य, सुरसुन्दरीणामन्तःपुरमवगाह्य, स्वयमविकलेन्द्रियः (स्तम्भितान्तर्जलौघः) वस्वोकसारां नगरीं संप्राप्य, वैरिणा धनदस्योपवनं प्रविश्य, स्ववातैर्नानाचेष्टैः कल्पद्रुमानुच्छिद्य, यक्षवनितामन्विष्य, महता अभिनिवेशेन संदेशमखिलमुपाहरन् दुर्लभतमं बन्धुकृत्यं निर्वहन्नसौ बलाहकः—चक्रवर्तिनः सुग्रीवस्य महोपकारमाचरितवतः रामभद्रस्य प्रत्युपकारचिकीर्षया सूर्यात्मजस्य निदेशं शिरसि निधाय, ऋश्यमूकात् दक्षिणां दिशं प्रस्थाय, महान्तमर्णवं विलङ्घ्य, मध्ये च

घोरेण वपुषा समुपस्थितां नागमातरं सुरसां छायाग्राहिणीं सिंहिकां चोन्मथ्य, त्रिकूटशिखरमुपेत्य, लङ्काधिदेवतां वशीकृत्य, वस्वोकसाराप्रतिमां पुरीं संप्राप्य धनदानुजस्यान्तःपुरमवगाह्य, स्वयमविकलेन्द्रियः तदीयमुपवनं प्रविश्य, नानाचेष्टाभिः कुसुमद्रुमानुच्छिद्य, रामसंदेशं मैथिल्यै समुपाहृत्य, दुर्लभं भृत्यकार्यमनुष्ठितवन्तं चेतनोत्तमं पवनतनयं सर्वात्मना अतिशेते इति व्यञ्जयन्, स्वार्थनिरपेक्षत्वं पुरदुःखासहत्वं परार्थैकफलोद्योगप्रवणत्वं च सतां लक्षणमित्यादिधर्मसूक्ष्मं सम्यगनुशिक्षयन् रसिकजनरसायनमिदं काव्यमुपसंहरति महाकविः ॥

एतत्कृत्वा प्रियमनुचितप्रार्थनावर्त्मनो मे
सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुध्या ।
इष्टान् देशान् जलद विचरप्रावृषा संभृतश्रीः
मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥

सीतायाः पदमन्वेष्टुं पवनतनयादीनां सुग्रीवभृत्यानां प्रेषणे रामभद्रस्य प्रार्थना समुचितैव । इह निरुपाधिकं पुरस्कृत्य प्रणयं वलाहकमुखेनात्मनः प्रेयसीं प्रति संदेशप्रेषणाभिलाषो यक्षस्यानुचित एव । अथापि तस्याशाभङ्गविमुखेन जलदेन तदीया प्रार्थना अङ्गीकृता सम्यङ्निर्वर्तिता च समभूत् ।

अतोऽनुचितप्रार्थनावर्त्मनोऽपि यस्यकस्यापि चेतनस्याशाभङ्गः न कदापि विवेकिना करणीयः इतीयमेवोदारस्वभावानां महाशयानामार्द्रान्तरात्मनां प्रकृतिरिति व्यञ्जयन् महाकविः, आत्मनो विषये महान्तमुपकारमनुष्ठितवतो मेघस्य प्रत्युपकारमात्मना करणीयमन्यमपश्यन् 'सखे जलद! प्रणयिनः कैलासस्योत्सङ्गे कामिनीवदनवरतं शयानालकेव रमणीये तवोत्सङ्गेऽजस्रमियं सौदामनी विलसतुतमाम् । सहैवानया कामचारी देशानिष्टान् विचरन् चिरं जीव' इति मङ्गलमाशंसमानो यक्षः आत्मनो निरतिशयां कृतज्ञतामाविष्करोति इति सूचयन्, देहद्वयार्धघटनारचितस्यार्धनारीश्वरशरीरस्य कश्चिदित्यारब्धेन पूर्वभागेन विद्युदित्यारब्धेनोत्तरभागेन च समुपेतस्यास्य काव्यस्य च साम्यमवगमयन्, 'सौभाग्यं जगतां यस्य वामे वपुषि वर्तते' इति निर्दिष्टरीत्या काव्यस्यास्यापि श्रोत्रपेयेनोत्तरभागेनैव रसिकजनाभिनन्दनीया सुषमा समुत्पन्नेति द्योतयन्, पुंस्थानीयेषु पूर्वभागगतेषु श्लोकेषु कामिनीस्थानीया उत्तरभागगताः सूक्तयः तत्र तत्र यथाक्रमं संभूय रसपोषमातन्वते । तदनुवाचकैः रसिकजनैः पूर्वोत्तरमेघयोः सुश्लिष्टता सूक्ष्मदृष्ट्या अवगन्तव्येत्यादिकं गूढमाशयं 'माभूदेवं क्षणमपि च ते विद्युता विप्रयोगः' इत्यनेन ध्वनयन्, हनूमत्संदेशानुवर्णनपरस्य सुन्द-

रस्य काण्डस्यासकृदनुसंधानेन धनधान्यप्रेयसीसन्तानादीनां लाभो भवति किल; तथैवास्यापि तत्सजातीयस्य सुन्दरतमस्य काव्यरत्नस्यानुचिन्तनेनानुवाचकानां परार्थैकफलप्रवृत्त्याद्यात्मगुणसंपत्तिः, कालवर्षिणा पर्जन्येन श्रियः समृद्धिः, विद्युत्समानलावण्यानां सुन्दरीणां प्राप्तिः, प्रणयवतीभिस्ताभिरनितरसुलभानां भोगानामनुसेवनं चानायासेन संपद्यन्तामित्यभिलषन्,— सत्यं पुण्यश्लोकसंकीर्तनरहितस्य प्राकृतजनप्रणीतस्यास्य काव्यस्यानुवाचकानां तादृशफललाभोपपादनाभिलाषः ममानुचित एव; अथापि वलाहकादपि सर्वात्मना उदारस्वभावः समस्तकल्याणगुणगणाकरो जगदीश्वरः मदीयामिमां प्रार्थनामनुचितामपि सफलयतु—इति मञ्जुलैः पदैः प्रार्थयन् विरमतीत्यवगच्छन्तो वयं ब्रह्मानन्दसहोदरे वाग्विषयातीते प्रमोदसागरे प्लवमानाः कृतकृत्या भवामः ॥

इति काव्यगुणादर्शे मेघसंदेशविमर्शः ॥



